Reg. No. C 1073



Vol. XXXI.

January 1949

भारत

३१श-वर्षस्य

९म-संख्या

१८७०-शकीये

पौषे



# संस्कृतसाहित्यपरिषत्पत्रिका

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीराधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

---

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता ।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

| Vol. XXXI, No. 9. | १८७०-शकीये पौषे ३१श-वर्षस्य ९म-संख्या | January, 1949. |
|---|---|---|


## श्रौतसूक्तिः

अग्ने नय सुपथा रायेऽस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम ।

---

तदनुवर्त्तिनी

## लौकिकसूक्तिः

वित्ताय नः प्रेरय सत्सरण्या-
मग्नेऽमितज्ञान विधेहि बोधम् ।
नमोऽस्तु ते काम्यविरोधिपापा-
दस्मान् सुदूरे परिरक्ष नित्यम् ॥

---

# मतिमञ्जरी

:

मान्याः पारिषदाः ! संस्कृतविद्या चिरमनवद्यापि बहोः कालात् प्रभृति प्रभूतैः कारणैः सुदुर्गता जातेति दृश्यते प्रतिजनं प्रतिपत्तिः। वाञ्छन्ति च भूयांस एव विद्वांसो भूयः प्राचीनकाल इव भूयिष्ठां प्रतिष्ठामस्याः। तत्र च ते राष्ट्रभाषात्वमस्याः परमोपकरणं मन्यन्ते। पौषे मासि चन्दननगरप्रतिष्ठितप्रवर्त्तकसंघाश्रमे समवेता निखिलभारतवर्षीयदेवभाषा-परिषदपि तमेवार्थमुपाददाना सर्वानुमत्या सिद्धान्तं गृहीतवती यथा संस्कृत-भाषा नाम सर्वेष्वर्थेषु समुपयुक्ता राष्ट्रभाषात्वमासादयत्विति। तदर्थं यावान् कृत्यभारो वोढव्यः स तया परिषदा निर्विकल्पं सम्पादयिष्यते। दृश्यते चानुकूलो वायुप्रवाहः। तथाहि वङ्गराष्ट्राधिकृता माननीयप्रदेश-पालाः श्रीमन्तः कैलासनाथकाट्जुमहोदया बहुत्र सनिर्बन्धं स्वाभिमतं स्पष्टं प्रतिपादितवन्तो यदियं संस्कृतभाषैव सकलार्थकल्पवल्ली योग्या राष्ट्रभाषापदाधिकारे स्वातन्त्र्यसमुदये सम्प्रति भारतवर्षस्य। अन्येषा-मपि केषाञ्चन राष्ट्राधिकृतपुरुषाणामीदृश्येव मतिरुपलब्धा नातिचिरात् पूर्वम्। माननीयमहामहोपाध्यायश्रीविधुशेखरभट्टाचार्यप्रभृतयो मनी-षिणोऽपि संस्कृतस्य तथा गौरवं मन्यन्ते प्रतिपादयन्ति च महतावष्टम्भेन यथा संस्कृतमपहाय नान्यस्याः कस्या अपि भाषाया युज्यते राष्ट्रभाषात्व-मिति।

तदस्मिन्ननुकूले सर्वतो वाति वायुप्रवाहे हुताशनप्रज्वलनाय समपेक्षिता महती गोष्ठी यया विपुलेन कोलाहलेन संस्कृतभाषायाः सर्वथा राष्ट्रभाषा-पदाधिकारे योग्यत्वं प्रतिपाद्य भारतराष्ट्राधिकृतेषु गौरवमस्या निरव-शेषं प्रतिपाद्येत।

एतदर्थं यत्र यत्र सन्ति संस्कृतसमुन्नतये प्रतिष्ठिता या याः परिषदः तासां सर्वासामैकमत्येन प्रकृतकृत्यसम्पादनाय प्रवृत्तिरपेक्षिता भवति।

तदत्र सर्वासां परिषदां नायकाः सन्नद्धा भवन्तु । अभिगच्छन्तु तांस्ता-नभ्यर्हितपुरुषान् येषामानुकूल्यलाभेन स्वल्पोऽप्युपकारः प्रकृतविषयस्य सम्भवेत् । समनुतिष्ठन्तु च संस्कृतभाषाया विपुलप्रचाराय प्रयत्नशतम् । प्रत्ययश्चोपजनयन्तु जनसङ्घेषु यथा नैषा भाषा सुतरां दुरूहा । अस्त्यस्या द्विविधं रूपम् एकं साहित्यविनियोगोपयुक्तम् अन्यच्च समुपयुक्तं संवादादि-साधारणकृत्येषु । तदेतद् द्वितीयं रूपमुपाददाना संस्कृभाषा विनैवायासं शक्या समधिगन्तुं प्रयोक्तुञ्च प्रतिजनं सुगमभाषान्तरसाम्येन ।

एवमुपायशतैरस्याः संस्कृतभाषाया राष्ट्रभाषापदोपलम्भे संस्कृत-विद्याया विनैवायासमभिवृद्धिः संस्कृतविद्यावताञ्च सुप्रशस्ता गतिरुपपद्येत । तदेतदर्थं सन्नद्धाः सन्तु न चिरं संस्कृतविद्याबान्धवा इति शम् ।

---

# युगावताराः

[ निबन्धकः—श्रीरवीन्द्रकुमारसिद्धान्तशास्त्री ]

( पूर्वानुवृत्ताः )

एतावता भगवान् श्रीकृष्णः कलेरादिसन्धावन्तिमे भागे जन्मग्रहण-ञ्चकारेति स कलियुग एव जातवानित्यवगन्तव्यम्, न तु द्वापरे तत्सन्धौ वा । कलिसन्धिः खलु कलियुगस्यैवाङ्गं, न तु केनापि स द्वापरयुगस्याङ्गतां यातुमर्हति । एतेन—

"शतेषु षट्सु सार्द्धेषु त्र्यधिकेषु च भूतले ।
कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः ॥"

इति राजतरङ्गिणीकारमतमपि निरस्तम् ।

एतेन 'इदानीं कृष्णतां गतः' इति महर्षिणा गर्गेण यन्निगदितं तत्रेदानीं-शब्देन ससन्धिकलियुग इत्यवगन्तव्यम् ।

महाभारतेऽपि—

"श्वेतः कृतयुगे वर्णः श्यामस्त्रेतायुगे मम ।
रजो द्वापरमासाद्य कृष्णः कलियुगे यथा ॥"

(वनपर्व, १८९ अः, ३२ श्लोः)

इत्यनेन श्रीकृष्णस्य कलियुगावतारत्वमेव स्फुटमभिहितम् ।

पुनश्च श्रीमद्भागवते कलियुगावतारस्य वर्णनाप्रसङ्गे—

"कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्तनप्रायैर्यजन्ति हि सुमेधसः ॥"

(११ स्कः, ५ अः)

इति कथनात् कृष्णवर्णस्य श्रीकृष्णस्यैव कलियुगावतारत्वं विघोषितम् ।

श्रीमद्भागवतस्य टीकाकाराणामग्रणीस्तत्रभवान् श्रीधरस्वामिमहोदयोऽपि श्लोकस्यास्य व्याख्यया श्रीकृष्णस्य कलियुगावतारत्वमेव विघोषितवान् । तथा हि स्वामि-टीका—

"कृष्णतां व्यावर्तयति, त्विषा कान्त्या अकृष्णम् इन्द्रनीलमणिवदुज्ज्वलम् । यद्वा त्विषा कृष्णं कृष्णावतारम् । अनेन कलौ कृष्णावतारस्य प्राधान्यं दर्शयति । अङ्गानि हृदयादीनि, उपाङ्गानि कौस्तुभादीनि, अस्त्राणि सुदर्शनादीनि, पार्षदाः सुनन्दादयस्तत्सहितं यज्ञैरर्चनैः सङ्कीर्तनं नामोच्चारणं स्तुतिश्च तत्प्रधानैः । सुमेधसो विवेकिनः" इति ।

अपि च 'आसन् वर्णास्त्रयो ह्यस्य' इत्यादिश्लोकेन शुक्ल-रक्त-पीतवर्णानामवताराणामतीतकालत्वाभिधानादवशिष्टस्य श्रीकृष्णस्यैव कलियुगावतारता प्रतिपादिता, अन्यथा आसन्निति पदस्यासङ्गतेः । महाभारतेऽपि—

"द्वापरे तु युगे धर्मो द्विभागोनः प्रवर्तते ।
विष्णुर्वै पीततां याति चतुर्द्धा वेद एव च ॥"

(वनपर्व, १४९ अः, २७ श्लोः)

इति श्लोकेन द्वापरयुगावतारस्यैव पीतवर्णता विघोषिता । कलियुगे भगवदवतारः कृष्णवर्ण एवासीदिति महाभारतीयेन वचनान्तरेणापि समर्थ्यते । तदुक्तं वनपर्वणि—

"तामसं युगमासाद्य कृष्णो भवति केशवः ।" इति

(१४९ अं: ३४ श्लोकः)

'कृष्णवर्णं त्विषाकृष्ण'मित्यादि श्लोकस्य व्याख्यायां यद्यपि चैतन्यानुरक्ताः कृष्ण इति वर्णद्वयं मुखे यस्य, कृष्णः कृष्ण इति भाषमाणमित्यर्थः, त्विषा अकृष्णं गौरवर्णं, इत्येवंविधं कल्पनागौरवं कृतवन्तस्तदसङ्गतं तस्य प्रमाणविरुद्धत्वात् । 'कृष्णः कलियुगे तथा' इति महाभारतोक्तेरनन्तरं न हि केनापि कदापि श्रीकृष्णादन्यस्य कस्यापि कलियुगावतारत्वं प्रमाणयितुं शक्ष्यते । एतेन—'अन्तःकृष्णं बहिर्गौर'मित्यादि तत्त्वसन्दर्भवचनमपि निरस्तम् ।

"कस्मिन् काले स भगवान् किंवर्णः कीदृशो नृभिः ।
नाम्ना वा केन विधिना पूज्यते तदिहोच्यताम् ॥"

( भागः, ११ स्कः, ५ अः, १८ श्लोः )

इति राज्ञः प्रार्थनायाः परं श्रीकरभाजन उवाच—

"कृतं त्रेता द्वापरश्च कलिरित्येषु केशवः ।
नानावर्णाभिधाकारो नानैव विधिनेज्यते ॥
कृते शुक्लश्चतुर्बाहुर्जटिलो वल्कलाम्बरः ।
कृष्णाजिनोपवीताक्षान् बिभ्रद्दण्डं कमण्डलुम् ॥
... ...
हंसः सुपर्णो वैकुण्ठो धर्मो योगेश्वरोऽमलः ।
ईश्वरः पुरुषोऽव्यक्तः परमात्मेति गीयते ॥
त्रेतायां रक्तवर्णोऽसौ चतुर्बाहुस्त्रिमेखलः ।
हिरण्यकेशस्त्रय्यात्मा स्रुक्-स्रुवाद्युपलक्षणः ॥
... ... ...
द्वापरे भगवान् श्यामः पीतवासा निजायुधः ।
श्रीवत्सादिभिरङ्कैश्च लक्षणैरुपलक्षितः ॥

तं तदा पुरुषं मर्त्या महाराजोपलक्षणम् ।
यजन्ति वेदतन्त्राभ्यां परं जिज्ञासवो नृप ! ॥

… … …

इति द्वापर उर्वीश स्तुवन्ति जगदीश्वरम् ।
नानातन्त्रविधानेन कलावपि तथा शृणु ॥
कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् ।
यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥" इति ।

( ११ स्कः, ५ अः, १८-३० श्लोः )

अत्र सत्ययुगे भगवदवतारस्य वर्णः श्वेतः, त्रेतायां रक्तः, द्वापरे च श्याम आसीदिति कथनात् पारिशेष्यात् कलौ तस्य वर्णः पीत इति चैतन्यानुरक्तानामभिप्रायः । तत्रभवतः श्रीधर-स्वामि-महोदयस्य व्याख्या पुनस्तेषां मतमिदं खण्डयति । व्याख्यातञ्च स्वामिपादेन-'श्यामः अतसी कुसुमसङ्काशः' इति । यथासंख्यन्यायोऽपि तावदत्र खण्डयितुं न शक्यते ।

तर्हि को द्वापरयुगावतार इति चेत्, श्रीरामचन्द्रस्यैव तथात्वं वेदितव्यम् ; अन्यथा तस्य द्वापरयुगावतारस्य महाराजोपलक्षणमिति विशेषणं नैव सङ्गच्छते । न हि श्रीकृष्णः कदापि महाराजचिह्नानि दधार, न चासौ सिंहासनमारुरोह, महाराजोपलक्षणमिति पदस्य 'छत्रचामरादियुक्त' मित्यर्थः कृतस्तत्रभवता स्वामिपादेन ।

वस्तुतस्तु 'श्यामः अतसीकुसुमसङ्काशः' इति स्वामिकृता व्याख्या नैव समर्थनीया, तथार्थे श्यामशब्दस्याप्रसिद्धेः । श्यामशब्देनात्र शुकपत्राभत्वमेव वेदितव्यम् । उक्तञ्च विष्णुधर्मोत्तरे—

'द्वापरे शुकपत्राभः कलौ श्यामः प्रकीर्त्तितः ।' इति ।

तर्हि कथं 'शुक्लो रक्तस्तथा पीतः' इति द्वापरे भगवदवतारस्य पीतवर्णत्वं प्रख्यापितमिति चेत्, सत्यं श्रीरामचन्द्रस्य परिधेयवस्त्रमीषत्पीताभमासीदिति वस्त्रवर्णेन सोऽपि पीतवर्ण इति कथितः । वस्तुतस्तु श्रीरामचन्द्रस्य

गात्रवर्णः शुकपत्रवत्, नीलोत्पलवत्, मेघवद् वा श्याम एवासीदिति रामायणतोऽवगम्यते। तदुक्तं रामायणे—

"नीलोत्पलदलश्यामः किञ्जल्कारुणवाससा।
प्रावृट्काले यथा व्योम्नि सतड़ित्तोयदो यथा॥
श्रीमान मेघवपुःश्यामः श्रीमत्पङ्कजलोचनः।
श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः॥"

एतेन श्रीरामचन्द्रस्य श्रीवत्सलक्षणत्वमपि प्रमाणितम्।

(उत्तरकाण्ड, ४४ सर्ग)

ननु तर्हि 'रक्तो द्वापरमासाद्य' इति महाभारतवचनं कथं सङ्गमनीयमिति चेत्, श्रीरामचन्द्रस्य वस्त्रं किञ्जल्कवदरुणवर्णमासीदिति पूर्वोक्त-रामायण-वचनादवगम्यते। अरुणस्तु पीत-रक्तयोर्मध्यवर्त्ती कश्चिदस्फुटो वर्णः। तथा चोक्तममरकोषे—'अव्यक्तरागस्त्वरुणः' इति। अतस्तदीयवस्त्रवर्णस्य पीत-रक्तयोर्मध्यवर्त्तितया यया युक्त्या स पीतवर्ण इति कथ्यते, तयैव युक्त्या रक्तवर्ण इत्यपि निगद्यते।

अथ श्रीरामस्य द्वापरयुगवर्त्तित्वं कथं विज्ञातव्यमित्यपि न वाच्यं, यतोऽसौ त्रेता-द्वापरयोः सन्धौ जन्म लब्ध्वा द्वापरयुगस्य प्रथमं भागमलञ्चकारेति महाभारतादिभ्यो ग्रन्थेभ्योऽवगम्यते। तथा चोक्तं महाभारते—

"सन्ध्यंशे समनुप्राप्ते त्रेताया द्वापरस्य च।
अहं दाशरथी रामो भविष्यामि जगत्पतिः॥" इति

(शान्ति, ३३९ अः, ८५ श्लोः)

त्रेता-द्वापरयोः सन्धिसमये राम-रावण-युद्धं बभूवेति वहूनामेव ज्ञानिप्रवराणां सिद्धान्तः। श्रीरामचन्द्रस्तु तदनन्तरमपि एकादश-सहस्र-वर्षाणि राज्यञ्चकारेति रामायणादि-ग्रन्थेभ्यो विज्ञायते। अतः स द्वापरादौ पृथिवीं पालयामासेति वक्तुमर्हामः। श्रीमद्भागवते महाराजोपलक्षणस्य तस्य द्वापरयुगावतारत्वकीर्त्तनादपि पुनः श्रीरामचन्द्रस्य द्वापर-

युगवर्त्तित्वमेव सुप्रमाणीक्रियते। अथवा श्रीरामचन्द्रस्य क्षत्रयोनि-सम्भूततयापितस्य वर्णो रक्त इति वक्तुं शक्यते। उक्तञ्च महाभारते—

"ब्राह्मणानां सितो वर्णः क्षत्रियाणान्तु लोहितः।" इति

(शान्ति, १८८ अः, ५ श्लोः)

वस्तुतस्तु 'रक्तं नील्यादिरागि च' इत्यमरवचनान्नीलोत्पलदलवच्छयामवर्णस्य श्रीरामचन्द्रस्य वर्णो रक्त आसीदिति नास्ति सन्देहावसरः, रञ्ज-धातोः रक्तशब्दस्योत्पत्तेः।

त्रेतायुगे भगवदवतारो यज्ञरूपो बभूव, तस्य चतुर्बाहुविशिष्टतादिषु नास्ति कस्यापि विप्रतिपत्तिः। केवलं 'श्यामस्त्रेतायुगे मम' इति महाभारतवचनात्तस्य वर्णविषये वैमत्यमाशङ्क्यते। अत्रापि 'रक्तं नील्यादिरागि च' इत्यमरवचने समादृते नास्ति विप्रतिपत्तेरवसरः। इति शम्।

---

# ब्रह्मसूत्र-मितभाष्यम्

( जन्माद्यस्य यतः )

[ निबन्धकः—श्रीचारुकृष्णदर्शनाचार्यः ]

( पूर्वानुवृत्तम् )

यदप्यविद्यैव जगतः परिणामिकारणं सा च विश्वाकारेण परिणमते ब्रह्माधिष्ठाने इति तदप्यकिञ्चित्करम्, अविद्यायाः प्रधानवत् परिणामशीलत्वे सर्वदैव तत्प्रसङ्ग इति प्रलयः प्रलीयेत, काचित्कत्वे च परिणामस्य तत्कारणं किञ्चिद् वाच्यं तस्य चाभावात् अनुपपत्तिः, न च जड़ाया अविद्यायाः स्वतःप्रवृत्तिर्लोकेऽदर्शनात्, वक्ष्यति च "रचनानुपपत्तेश्च नानुमानमि"ति ब्रह्मणश्च पुरुषवत् कौटस्थ्यात्, सन्निधेश्च सातत्यात् सृष्टिसातत्यप्रसङ्गः। न च मायोपहितं ब्रह्मैव ईश्वरभावापन्नं निमित्तोपादानमिति वाच्यं, तत्रापि

मायाया जड़त्वात् ब्रह्मणश्च कौटस्थ्यात् तद्दोषतादवस्थ्यम्, उक्तं च "परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं च प्रवर्त्तकत्वम्" इति, मायोपाधिवशात् ब्रह्मण ईश्वरत्वे जन्यत्वप्रसङ्गः, उक्तं च "मायाख्यायाः, कामधेनोर्वत्सौ जीवेश्वरावुभौ" इति, तथाच उक्तदोषप्रसङ्गः, अनादित्वे च औपाधिकत्वानुपपत्तिः अनादिभावत्वात् ब्रह्मवत् नित्यत्वप्रसक्तिश्च अत एव श्रुतिसूत्रयोः सृष्टिप्रकरणेषु मायाया अविद्याया वा नामापि नोपलभ्यते, "इन्द्रो मायाभिः पुरुरूप ईयते" इति मायाशब्दश्च अजापदवत् भूतत्रितयपरः ज्ञानपरो वा "माया वयुनं ज्ञानमि"ति निघण्टूक्तेः, "तदैक्षत बहु स्यां प्रजायेय" इति ईक्षणश्रवणात्, न तु स्वकल्पितत्रिगुणयत्किञ्चित्परः वेदान्तेषु गुणानामभावात् सांख्यकल्पितत्वाच्च। किञ्च माया ब्रह्मवद् विभ्वी मध्यमपरिमाणा वा? आद्ये विशुद्धब्रह्माभावप्रसङ्गः, "पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवी"ति श्रुतिश्च कुप्येत, नित्यत्वप्रसङ्गश्च। अन्त्ये जन्यत्वापत्तिः, अनादिभावरूपा मध्यमपरिमाणा चेति विरोधश्च। अस्मन्नये तु सांख्यानां प्रधानवत् ब्रह्मैव परिणामि नित्यम् अंशतः परिणमते, 'तत्तेजोऽसृजत' तदात्मानं स्वयमकुरुत" यत्तदद्रेश्यमग्राह्यमगोत्रं तदयोनिं परिपश्यन्ति धीराः यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि यथाऽक्षरात् सम्भवतीह विश्वम्। "पादोऽस्य विश्वाभूतानि" "कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्" "यो वै वालाके पुरुषाणां कर्त्ता" इत्यादिश्रुतिभ्यः। "निष्फलं निष्क्रियं शान्तं" "न तस्य कार्यं करणं च विद्यते" "मायां तु प्रकृतिं विद्यात्" इति सांख्यश्रुतयस्तु न प्रमाणमित्युक्तम् अत एव सुवर्णं कुण्डलं तन्तवः पट इतिवत् "आत्मैवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" इत्यभेदश्रुतिः, ऊर्णनाभ्यादिपरिणाम दृष्टान्तश्रुतिश्चोपपद्येते। न च रज्जुसर्पादिदृष्टान्त उक्तः श्रुतिसूत्रयोः न च रज्जुरेव सर्प इत्यमूढो ब्रूते, परमतो मायाया एव प्रवर्त्तकत्वात् आत्मनश्च कौटस्थ्यात् तदनुपपत्तिः, ईश्वरस्यापि मायांशस्यैव परिणामत्वे

यत्प्रयुक्तः परिणामस्तस्यैव उपादानत्वं वाच्यं तथा सति मायैवेदं सर्वमित्यु च्येत। वेदान्तेषु कूटस्थनिर्विकारादिशब्दानामप्यभावाच्च। तथाहि—

कूटस्थो निर्विकारश्च निर्विशेषो निरंशकः।
रज्जुसर्पादयश्चानिर्वाच्याऽविद्या गुणास्तथा॥
अनौपनिषदा ह्येते सांख्यबौद्धादिकल्पिताः।
तस्मात् सूत्रकृता नोक्ताः शास्त्रेऽस्मिन् पारमार्थिके॥

न च मायोपहितस्य ब्रह्मण ईश्वरत्वमनुपहितस्य च विशुद्धब्रह्मत्व-मुक्तं वेदान्ते, तथासति "सर्वं खल्विदम् ईश्वरो मायीवेत्युच्येत, "सदेव सौम्येदमग्र आसीदि"त्युक्तस्य सत एव तेज आदि क्रमेण सृष्टिरुक्ता "तत्ते-जोऽसृजते"ति। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इत्यपि न प्रमाणं प्राचामनुल्लेखात्। न च मायया कार्योत्पादे रज्ज्वादिवन्नियमेना-धिष्ठानापेक्षा, आकाशेऽपि गजाद्युपलब्धेः, क्षित्यादेश्च प्रपञ्चस्य सत्यत्वात् येन केनापि संबध्यते मात्रमित्यनपेक्षाऽधिष्ठानस्य मायिके कार्ये। अत एव क्षित्याद्यधिष्ठानदर्शनेऽपि न तद्विनाशः। यत्र हि सादृश्यनिबन्धनो भ्रम-स्तत्रैव सदृशस्य कस्यचिदपेक्षा न सर्वत्र, तथापि दोषस्यैव सत्यस्य कारणत्वं नाविद्याया इति वक्ष्यते, एतेन भ्रमाधिष्ठानत्वमुपादानत्वमिति प्रत्युक्तम्। प्रायश एव हि मायाविनो मायाया दर्शकानां बुद्धिवैकल्य-माधाय दर्शयन्ति विचित्रं भावजातं, न तत्र विषयलेशोऽपि, कदाचित् विषयोत्पादे च ते सत्या एव अर्थक्रियाकारित्वात्। द्विचन्द्रदर्शनेऽपि अन्वयव्यतिरेकाभ्यां नेत्ररोग एव कारणम् सत्याच्च तस्मात् ज्ञानमात्रं भवति चन्द्रस्य। आत्मैवेत्येवकारेण च विजातीयभेदव्युदासः, नहि कार्यकारणयोर्भेदो वर्त्तते, सुवर्णमेव कुण्डलमित्युक्तेः न पुनर्नायं सर्पो रज्जु-रियमितिवत् नेदं कुण्डलमिति निषिध्यते, युतसिद्धयोरेव घटपटयो र्भेददर्शनात्, अयुतसिद्धानाञ्चाभेदः सुवर्णं कुण्डलं शुक्लः पट इति। तथाहि भेदो नाम विभागः, अस्मन्नये भेदविभागपृथक्त्वानामेकत्वात्, न तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावः मानाभावात्, शिरोमणिना च

पदार्थखण्डने पृथक्त्वस्य गुणत्वं निरस्य अन्योऽन्याभावत्वमेव स्वीकृतम्। विभागाभावश्चाभेदः न तादात्म्यं द्रव्यगुणादीनां तादात्म्याभावेऽपि विभागाभावादेवाभेदव्यवहारः। तथाहि—

तादात्म्यं तत्स्वरूपत्वमभेदस्त्वविभक्तता।
जातिव्यक्त्योरभेदेऽपि न तादात्म्यं मतं हि नः॥ इति।

अत एव शक्तिशक्तिमतोरभेदप्रसिद्धिरुपपद्यते द्वित्वं च, द्रव्यं न गुण इति प्रतीतिस्तु गुणतादात्म्याभाववद् द्रव्यमित्यत्यन्ताभावमेवावगाहते न गुणभिन्नं द्रव्यमिति भेदम्। यथा मूले वृक्षः कपिसंयोगी नेति प्रतीतौ मूलावच्छिन्नो-वृक्षः कपिसंयोगात्यन्ताभाववान् इत्येव विषयः भेदस्य व्याप्यवृत्तित्वनियमात्। आहुश्च पुराणकृतः।

"धावल्यदुग्धयोरैक्यं दाहिकानलयोर्यथा।
भूगन्धजलशैत्यानां नास्ति भेदस्तथावयोः"॥ इति

आवयो राधाकृष्णयोः, नहि भूगन्धादीनां तादात्म्यं दृश्यते लोके, तथा कार्यकारणयोरप्यभेद एव न तादात्म्यं भेदाभेदौ कार्यमिथ्यात्वं वा। वक्ष्यति च सूत्रकारः "तदनन्यत्वमारम्भणशब्दादिभ्य" इति न तादात्म्यम्, अत एव मुक्तस्यात्मनो ब्रह्मलोकगत्या विशुद्धब्रह्मणा एकीभावे अविभाग माह "अविभागेन दृष्टत्वात्" इति न तादात्म्येन। श्रुतिश्चाह—

"यथा नद्यः स्यन्द्यमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान् नामरूपाद् विमुक्तः परात् परं पुरुषमुपैति दिव्यम्"॥

नहि नदीजलं समुद्रं प्राप्य तज्जलेन तदा नदी भवति किन्तु अविभक्त मेव, तथा जीवब्रह्मणोरेकीभावो नाम न तादात्म्यं किन्तु उक्तदिशा अभेद एवेति ज्ञेयम्। सम्बन्धश्च कार्यकारणयोरभेद एव न तादात्म्यमिति।

# वृत्तवार्त्तिका

१९४८ खृष्टाब्दीयडिसेम्बरमासस्य चतुर्विंशदिवसे पौषकृष्णनवम्यां तथा तत्परदिवसे अखिलभारतवर्षीयदेवभाषापरिषदः सप्तदशं वार्षिकाधिवेशनं चन्दननगरे प्रवर्तकसंघाश्रमे महता परिकरेण सुसम्पन्नमभूत्। तत्र नानादेशीयाः संस्कृतविदः पण्डिताः सम्मिलिताः संस्कृतभाषाया महत्त्वमुदघोषयन्। प्रथमे दिवसे सभापतिपदमलङ्कुर्वद्भिः श्रीमद्भिः कलिकाताविश्वविद्यालयाध्यापकैः महामहोपाध्याय चिन्नस्वामिशास्त्रिपादैः सुगभीरार्थमभिभाषणं वाचितं, तत्र संस्कृतभाषायाः सुमहद् गौरवं सर्वार्थेषु योग्यत्वञ्च प्रतिपादितम्। तदभिभाषणमत्रैव पत्रिकायां प्रकाश्यमानं यथा पारिषदानां बोधपदवीमवगाहते तथैव कृतः प्रबन्धोऽस्माभिः।

द्वितीयदिवसे प्रातरालोच्यविषयनिर्धारणार्थं विषयनिर्वाचनी समितिः सम्मिलिता सभायामालोच्यानां विषयाणां निर्धारणं कृतवती। तदनुसारेणैव च सायं सभायामालोचिता विषयाः।

तत्र विषयेषु संस्कृतभाषाया राष्ट्रभाषात्वसिद्धान्त एव प्राधान्यमवगाहते। सोऽयं सिद्धान्तः सर्वानुमत्यैव परिगृहीतः। तदर्थं यावत् कर्तव्यं तदर्थञ्च देवभाषापरिषदः सर्वाण्युपकरणानि संग्राह्यानि।

कार्यसौकर्याय च वङ्गेषु कलिकातानगर्यां यथा देवभाषापरिषदः प्रधानकार्यालयः स्यात् तदर्थं प्रस्तावो गृहीतः।

अनन्तरमस्माभिरुपलब्धं यत् परिषदः प्रधानकार्यालयस्य प्रबन्धः कलिकातानगर्यामस्मिन्नेवान्तरे जातः। संस्कृतभाषाया राष्ट्रभाषात्वसम्पादनाय समुपयुक्तव्यवस्थाप्यंशतः समनुष्ठिता परिषदेति। तदस्यारम्भस्य शुभोदर्कतां वयमपेक्षामहे।

# Sanskrit Sahitya Parishat Series

**(Corrected up to April, 1946)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Almost out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. As 10 ; As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4 ; Re. 1 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina-charan Bhattacharya. Re. 1-4 ; Re. 1 (for members).

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish-chandra Siddhantabhushan. As. 8 ; As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D.As. 12 ; As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 7 ; As. 5 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4 ; Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 6 ; As 5. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M.A. As. 12 ; As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Re. 1 As. 4 ; Re. 1 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 2 ; Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1. ; As. 12 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 2 As. 8 ; Rs. 2 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof. Akshayakumar Shastri. Re. 1 As. 4 ; Re. 1 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12 ; Rs. 3 (for members). [Almost out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 3. As. 8 ; Rs. 3 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. As. 10 ;As. 8 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 ; As. 12 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 6; 5 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 4

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 2 As. 8; Rs. 2 As. 4 (for members).

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXI. | February 1949
No. 10. | १८७०-शकीये
३१श-वर्षस्य | माघे
१०म-संख्या | मासे

भारते मातु भारती

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—14s.

# SOME BACK VOLUMES

OF THE

**Sanskrit Sahitya Parishat Patrika**

AVAILABLE FOR SALE

*Price* :—Volumes upto 10th year Re. 1/- per copy
,, From 11th to 20th year /10/- per copy
,, ,, 21st to 30th ,, ,, /6/- ,, ,,

(Postage and Packing charges to be paid extra.)

*Apply to the Secretary,*

SANSKRIT SAHITYA PARISHAT

17, R. G. Kar Road,
P.O.—Shyambazar, Cal. 4

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXI, No. 10. | १८७०-शकीये माघे ३१श-वर्षस्य १०म-संख्या | February, 1949.

## श्रौतसूक्तिः

यो अस्मै हविषाविधन्न
तं पूषापिमृष्यते ।
प्रथमो विन्दते वसु ।

---

तदनुवर्त्तिनो

## लौकिकसूक्तिः

यः किल यष्टा हविषा
विधिना परिषेवते दिवसनाथम्
पूषदपि हन्ति न तं स
प्रथमः स विन्दति वसुजातम् ॥

---

# मतिमञ्जरी

पूर्वं पञ्चविंशतेः संवत्सरेभ्यः कलिकाता-राष्ट्रीयसंस्कृतमहाविद्यालयस्य शतवर्षपरिपूर्त्तौ तदानीन्तनाध्यक्षाणां श्रीआशुतोषशास्त्रिणां समुद्यमेन दिनमेकमुत्सवः समजनि, सम्प्रति च तस्यैव सपादशताब्दीपरिपूर्त्तौ तत्राध्यक्षपदमधितिष्ठतां डाक्तार-श्रीयतीन्द्रविमलचतुर्धुरीणानां महता समुद्यमेन पञ्च दिनानि यावत् नानाविधा उत्सवाः समजायन्त।

तदवसरे च तस्य महाविद्यालयस्य आदिकालात् प्रभृति यावन्ति प्रधानवृत्तानि समभूवन् तान्यवलम्ब्य महानेक इतिहासग्रन्थः इतिहासविशारदब्रजेन्द्रनाथवन्द्योपाध्यायप्रणीतः प्राकाश्यं नीतः श्रीमद्भिरध्यक्षवर्यैः। एतद्ग्रन्थपाठेन तस्य महाविद्यालयस्य बहूनि निगूढतत्त्वानि लोकानां बुद्धिगोचरतां यास्यन्ति। एतावत्कालं यानि वृत्तानि लोकैः खण्डशो विदितान्यासन् तान्येव सम्प्रति सुसम्बद्धतया ग्रन्थाकारेण निबद्धानि लोकानामितिहासरसिकानामतिमात्रां प्रीतिमुत्पादयिष्यन्ति। तदर्थं तदानीन्तनाध्यक्षाणां तत्सम्पादने विपुलमायासं स्वीकृतवतां श्रीब्रजेन्द्रनाथवन्द्योपाध्यायमहाभागानां तथा तत्प्रकाशनाय महान्तमर्थव्ययं कृतवतां राष्ट्रीयकोषाधिकृतानां बाहुल्येन साधुशब्दमुदीरयामः।

तस्य ग्रन्थस्य तावदिदं महद् वैशिष्ट्यं यत् यत्र यत्र यदेव वृत्तमुपन्यस्तं तत्र तत्रैव तस्य प्रमाणरूपेण राष्ट्रीयव्यवस्थालयगतप्रमाणपत्रादीनामुपादानेन सर्वं सप्रमाणमुपपादितम्। तेन इतिहासान्तरवत् अत्र अप्रामाण्याशङ्का नैव पदं कर्त्तुमर्हति। केषाञ्चित् प्राचीनपण्डितादीनां चित्राण्यप्यत्र परिगृहीतानि यानि सन्दृष्टानि सुमहत् कौतूहलं निवर्त्तयिष्यन्ति प्राचीनपण्डितप्रभृतीनां रूपसन्दर्शनाय परिस्पृहयताम्। सोऽयमुत्तमो ग्रन्थः सुतरामुपकाराय क्षमोऽपि राष्ट्रकोषगतो वित्तविनिमयेन लोकैः संग्राह्य इति महद् दुःखस्थानं दरिद्रपण्डितानां तन्महाविद्यालयवृत्तानि विविदिषतामिति सदुःखं निवेदयामः।

# चारणप्रश्नः

कस्त्वं चारण ! वारणाय जगतो मोहस्य सम्मूर्च्छतः
सन्दिष्टो विधिना धरापरिसरे लब्धावतारः पुरा ।
कस्त्वं शाश्वतवेदवादपरमो वीर्येण लोकोत्तरः
क्लैव्यं दुर्बलचेतसां व्यगमयः पार्थस्य कृष्णो यथा ॥

कस्त्वं भारतसंस्कृतिं परतरामार्यैकसेव्यां शुभां
लोके दीपयितुं पुरा विधिशतं प्राणैः पणैराचरः ।
यां व्यासप्रमुखाः प्रमाणपुरुषाः प्राचारयन्नुज्ज्वलां
या नित्यश्रुतिसम्मता स्मृतिशतैः सन्धारिता भूतले ॥

कस्त्वं सद्गुरुरामकृष्णकृपया विज्ञानमूर्जस्वलं
सम्प्राप्तो भुवने नवप्रतिभया ख्यातो महादेशिकः ।
तद्विस्तारमनीषया परिगतो द्वीपान्तरं वीर्यवान
व्याख्यानेन च विश्वधर्मसमितौ प्राचीं यशो नीतवान ॥

कस्त्वं दैन्यनिपीड़िते क्षितितले नानामयव्याकुले
दुर्दैवागतदुःखराशिविकले मृत्योर्भिया दुर्बले ।
सेवाकृत्यसमन्वयेन घटयन सेवासमाजान् बहून
लोकानां परिरक्षणेन भगवत्कृत्यानुकूल्यं व्यधाः ॥

कस्त्वं दूरपदेषु भारतभुवः कृष्टिं परश्रेयसीं
लोकानां हृदयेषु सम्प्रथयितुं गोष्ठीचय सृष्टवान् ।
यस्य प्रेरणयाद्य भारतभुवः शास्त्रीयतत्त्वावली
धर्मेणापि समं समादरवता चित्तेन तैरर्च्यते ॥

कस्त्वं मीलितलोचनो मुनिरिव ध्याने निमग्नः क्वचित
तेजोदृप्तविलोचनः क्वचिदपि क्षात्रप्रभाभास्वरः ।
दीनार्त्तिप्रसमीक्षणेन विगलद्वाष्पः क्वचित कातरः
श्रीमत्सद्गुरुरामकृष्णचरणप्रान्ते विनीतः क्वचित ॥

त्वमेकः शान्तात्मा यतिरसि तमोमुक्तहृदयो
महावीरः क्षत्रो वचसि जनतोद्दीपनकरे ।
स्वयं तत्त्वज्ञानी जगति हृतवान् मोहतिमिरं
विवेकानन्दात्मा विहर हृदि दिव्याय महसे ॥

---

# गीतायां वर्णाश्रमधर्मः

[ निबन्धकः—श्रीवसन्तकुमारचट्टोपाध्यायः ]

( पूर्वानुवृत्तः )

ब्रिटिश्शासनसमये बहुविधान्यायात्याचारैः वस्त्रवयनप्रभृतिशिल्पविद्या विनष्टाः । वर्णाश्रमधर्मस्य उत्कर्षविषये स्वयं भगवता एवोक्तं "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" । इति

ईश्वरलाभ एव धर्मस्य उत्कर्षः । ईश्वरलाभं विना दुःखमयसंसारे गमनागमने न निवृत्ते भवतः । तदुक्तम् "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥" इति

निरन्तरेश्वरस्मरणेनैव ईश्वरलाभो भवति । तथाचोक्तम्,—"अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥" इति

निरन्तरेश्वरस्मरणं दरिद्रेण मूर्खेणापि कर्त्तुं शक्यम् । परन्तु एतदर्थं यन्मनसः स्थैर्यमपेक्षितं तदतीव दुर्लभम् । अत एवार्जुनेनोक्तम्—

"चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥" इति

दृष्टमपि यन्मनः स्थिरीकृत्य दण्डकालं व्याप्य भगवन्तं स्मरामि इति संकल्पे कृतेऽपि वारं वारमनिच्छन्तोऽपि वयम् असारसंसारविषयानेव चिन्तयामः । किमस्य कारणम् । अस्माकम् बहूनि जन्मान्यभूवन् । तेषु जन्मसु निरन्तरं विषयसेवां कृत्वा विषयप्रवणा एव अस्माकं दृढसंस्कारा जाताः । अतः संकल्पविरोधेनास्माकं चित्तानि विषयैराकृष्टानि भवन्ति ।

अतस्तान् संस्कारान् दूरीकृत्य अस्माकं चित्तानि निर्मलतां नेयानि । अस्मिन् चित्तशुद्धिकरणविषये निष्कामकर्मसेवैव प्रकृष्टोपाय इति गीतायां भगवता निर्णीतम् । कर्मयोगविषये द्वौ प्रश्नौ भवतः । किं कर्म कर्त्तव्यं, केनोपायेन कर्त्तव्यम् इति च । किं कर्म कर्त्तव्यमित्यस्मिन् विषये भगवतोक्तं "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।" इति । कर्त्तव्याकर्त्तव्यविषये शास्त्रमेव प्रमाणम्, न तु मनुष्यबुद्धिः । भ्रमप्रमादसंकुलैव विदुषामपि बुद्धिः । अतः कस्यापि बुद्धिर्न निर्भरयोग्या । श्रुतेस्तावत् अपौरुषेयत्वात् न भ्रमप्रमादसंभावनास्ति । स्मृतीनामपि वेदान्तगामित्वात् न भ्रमशंकास्ति । उक्तं महाकविना "श्रुतेरिवार्थं स्मृतिरन्वगच्छत् ।" अतः श्रुतिस्मृतिमयं शास्त्रमेव भगवान् प्रमाणमुवाच । केन भावेन कर्म कर्त्तव्यमिति विषये भगवानाह, कर्मफलाकांक्षां कर्मणि आसक्तिं च परित्यज्य कर्माणि कर्त्तव्यानि । एवम्प्रकारेण वर्णाश्रमविहितकर्मणि क्रियमाणे चित्तं संस्कारवर्जितं निर्मलं च भवति, तस्मिन्निर्मलचित्ते सर्वदा ईश्वरस्मरणं सम्भवति, तत ईश्वरस्य कृपा भवति, तत्कृपया तस्य स्वरूपमनुभूयते । तत ईश्वरलाभो भवति । मनुष्यजन्मनः सार्थकता च सम्पद्यते । यथाह श्रुतिः,—

तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय ॥
नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥ इति ।

---

## कलिकाता-संस्कृत-महाविद्यालयप्रशस्तिः

विद्यावृद्धमहेशवर्द्धितकृतिः प्रागीश्वरोपस्कृतः
प्रेक्षादक्षहरप्रसादमहितो जुष्टः सुरेन्द्रादिकैः ।
यः काले च यतीन्द्रकल्पितमहः श्रीमन्नृपेन्द्रर्द्धिमान
आदित्योज्ज्वलितः स संस्कृतमहाविद्यालयो भ्राजताम् ॥१॥
चन्द्रस्य प्रभया तमोभरहरस्ताराविचित्राकृतिः
शश्वत् स्वच्छरसप्रचारसुभगो दिव्यप्रबोधास्पदम् ।

क्षमाख्याजनितोत्सवः सुमनसां मान्यः शरत्कालवत्
नित्यं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥२॥
धीराणामभवत् सुखं हृदि यतः श्रीप्रेमचन्द्रोदयात्
सिद्धानन्तवराशुतोषकृतिकृद् राजेन्द्रसंवर्द्धितः ।
देवानन्दपदं मदः सुमनसां योगेन्द्रयोगास्पदं
कैलासाद्रिरिवाद्य संस्कृतमहाविद्यालयो भ्राजताम् ॥३॥
यो गीर्वाणवचःसुधापरिकरः पाश्चात्यविद्यान्वयाद्
गङ्गाभानुतनूजयोरिव तयोः सङ्गं समाविन्दते ।
यस्याङ्कं किल वङ्गसंस्कृतसभा सर्वावनीविश्रुता
सोऽयं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥४॥
विद्याकीर्त्तिसितैः शतैः सुमनसामध्यापनाकौशलाद्
यत्रत्या बहुविश्रुताः समभवन् विद्यार्थिनः पूर्वतः ।
गैर्वाणीनवनृत्यमङ्गलकलारङ्गः सतां मङ्गलः
सोऽयं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥५॥
यस्मिन्नद्य विपत्तिमेत्य बहुधा स्वाधीनताभ्यागमे
स्वावासच्युतपूर्ववङ्गविबुधा दैन्येन सम्पीड़िताः ।
विद्यानिष्क्रयणेन वृत्तिमगमन् भाग्येन राष्ट्राहितां
सोऽयं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥६॥
वर्षाणां शतकं तथा समभवत् पञ्चाधिका विंशतिः
यस्यैतस्य निरन्तरं रचयतो विद्याप्रदानव्रतम् ।
नानाविघ्नसमागमेऽप्यविचलः प्रालेयशैलो यथा
सोऽयं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥७॥
कालेनाद्य यदीयदुर्गतदशा दुःखप्रदा ज्ञानिनां
यस्य प्रोन्नतये मतिः सुमनसां नानाविधोज्जृम्भते ।
यो नित्यं समपेक्षते बहुमतं प्राचीनभाग्योदयं
सोऽयं भारतराष्ट्रसंस्कृतमहाविद्यालयो भ्राजताम् ॥८॥

# भारतेतिहासः

( पूर्वानुवृत्तः )

तथा च श्रुतिः,—'ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत'। इति।

उक्तञ्च श्रीमद्भगवद्गीतायां श्रीभगवता,—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'। इति

अन्ये पुनराधुनिका हैतुका एवमाहुः, यथा—आर्या यदा प्रथमतः सिन्धुतीरे वसतिं विस्तारयाञ्चक्रुः तदा तेषु जातिभेदो नासीत्। तदा भारतवर्षवासिनः केवलमार्यानार्यभेदेन द्विधा विभक्ता आसन्। काले समाजानां व्यवस्थासौकर्यसम्पादनाय ते स्वयमेव गुणकर्मानुसारेण ब्राह्मणादिजातिचतुष्टयव्यवस्थां प्रवर्त्तयामासुः।

ये यागहोमादिधर्माचरणं विद्यानुशीलनं तथा शास्त्राध्यापनादिक्रिया-कलापञ्चक्रुः, ते ब्राह्मणा अभूवन्। समाजे ब्राह्मणानामेव सर्वतः प्राधान्य-मासीत्।

ये तेजस्विनो बलवन्तः संग्रामनिपुणाश्चासन् देशस्य शासने रक्षणे च व्याप्रियन्त, ते क्षत्रियसंज्ञां लेभिरे।

ये कृषिपाशुपाल्यवाणिज्यान्यकुर्वन्, तेषां वैश्यसंज्ञा बभूव।

ये च अनार्या आर्याणां वशीभूताः सेवाधममन्वतिष्ठन् वृत्त्यर्थं शिल्पादि-कञ्च शिश्रियुस्ते शूद्रसंज्ञाभाजः समाजे सर्वतो नीचैःपदमासेदुः।

आर्याः प्रथमतो देवानां देवीनाञ्च मूर्त्तिं निर्माय तत्र न तेषां पूजा-मकुर्वन्। आर्याः प्राकृतिकानि रूपाणि समवलोक्य मुग्धा भीता वा तत्र तत्र एकैकदेवतामकल्पयन्। एवमेव ते इन्द्राग्निवायुसूर्यप्रभृतिप्रकृति-शक्तीनां दैवतबुद्ध्या समाराधनाञ्चक्रुः। तत्तदुद्देशेन च ते वैदिकमन्त्रानु-

चार्य यज्ञादिकमकुर्वन । यज्ञहुताशने च तत्तदुद्देशेन घृतदधिप्रभृतीनि विविधवस्तूनि उपायनीचक्रुः ।

ते तावतीनां देवतानामाराधनाकारिणोऽपि परमेश्वरस्य एकत्वं तत्तद्देवतानाञ्च तस्यैव परमेश्वरस्य विभिन्नतया प्रकाशरूपत्वं शनैरवधारयाञ्चक्रुः ।

प्राचीने काले राजानः समाजे शिक्षाया विस्ताराय विशेषतो यत्नमन्वतिष्ठन । तेषामुत्साहेन तदा सर्वेषु ऋष्याश्रमेष्वेव एकैको विद्यालयः समवर्त्तिष्ट ।

पुरा आर्यबालकानां गुरुगृहे समवस्थानेन विद्याशिक्षा कर्त्तव्यतामधिचक्रे । शिष्या गुरुषु पितृष्विव गुरुपत्नीषु च मातृष्विव भक्तिमन्तः श्रद्दधानाश्चासन । तदा विद्यार्थिनः सुतरां संयमेन जीवनमयापयन्नत एव ते ब्रह्मचारिण इत्याख्यायन्ते स्म ।

ब्रह्मचारिणः प्रफुल्लेन मनसा गुरोरादेशं परिपालयाञ्चक्रुः तदीयगृहकर्माणि च सर्वाणि सम्पादयामासुः । ते विनयनम्राः कर्त्तव्यपराश्चासन । समाप्तविद्याश्च शिष्या यथाशक्ति गुरवे दक्षिणां दत्वा गुरुगृहात प्रतिनिवृत्ता अभूवन । आर्याः शिक्षाविधौ प्राचीनजात्यन्तरापेक्षया उत्तमा आसन् । ते शिल्पविज्ञानदर्शनज्योतिषप्रभृतिषु नानाविषयेषु परमामुन्नतिं लेभिरे । तैः प्रणीता बहवो ग्रन्था अद्यापि लभ्यन्ते । येभ्यस्तेषामसामान्यपाण्डित्यस्य परिचयः समासाद्यते ।

वैदिककालादर्वाक्तनदशायां सामाजिकराजनैतिकाचारव्यवहारादिव्यवस्थापनार्थमनेके ग्रन्था लिखिताः । तेषु मनुसंहिताग्रन्थ एव प्रधानतमः । तत्र हिन्दुधर्मावलम्बिनां विवाहश्राद्धतर्पणादि-नानाधर्मक्रियानामनुष्ठानपद्धतिप्रभृतिकं निबद्धमास्ते । तत्पाठेन हिन्दूनां तदानीमुन्नतेः कियती सीमेति शक्यमवगन्तुम् । (क्रमशः)

---

# वृत्तवर्त्तिका

विगत-डिसेम्बरमासस्य षड्विंशदिवसात् प्रभृति त्रिंशदिवसपर्यन्तं कलिकाता-राष्ट्रीयसंस्कृतमहाविद्यालयस्य सपादशताब्दीपरिपूर्त्तिमुपलक्ष्य दिवसपञ्चकव्यापी महानुत्सवः समजनि।

तत्र प्रथमे दिवसे विद्वदग्रेसराणां डाक्तार-श्रीयुतनरेन्द्रनाथलाहामहोदयानाम् आध्यक्ष्येण महाविद्यालयभवने सार्द्धचतुर्वादनावसरे सभाया आरम्भः समजनि। तत्र माननीयविचारपतयः श्रीयुतचारुचन्द्रविश्वासमहोदयाः प्रधानातिथिपदे वृता अभूवन्। तत्र विद्यालयस्य विद्यार्थिभिः वङ्गदेशीयसंस्कृतपदावलीनां गानं कृतम्, तदन्ते च मजिलपुरवास्तव्यैः श्रीकालाचाँदभट्टाचार्यैः स्वगणसहितैः श्रीदाशुरायस्य पदावली गीता।

द्वितीये दिवसे 'युनिभार्सिटी इन्ष्टिटिउट्' इत्याख्यप्रसिद्धनागरिकसभागृहे सायं चतुर्वादनात् प्रभृति पश्चिमवङ्गप्रदेशीयशिक्षासचिवानां माननीयश्रीयुतरायहरेन्द्रनाथचतुर्धुरीणमहाशयानामाध्यक्ष्येण सभा जाता। तत्र तदानीन्तनाध्यक्षैः डाक्तार-श्रीयुतयतीन्द्रविमलचतुर्धुरीणैः संस्कृतमहाविद्यालयस्य प्राचीनविविधवृत्तसमुद्घाटनेनाभिभाषणं पठितम्। सभापतिमहोदयैरपि संस्कृतविद्यामधिकृत्य स्वाभिमतमावेद्य वचनपरम्परया संस्कृतविद्यायाः स्वाधीने भारतवर्षे सम्भाव्यमानामुन्नतिं निवेद्य समुज्जीविता नैराश्येनापहतचेतसां संस्कृतपण्डितानां महती शुभाशा। तदनन्तरञ्च सभावसाने संस्कृतमहाविद्यालयस्य प्राक्तनैर्वर्त्तमानैश्च विद्यार्थिभिः सपरिकरं सप्रकर्षञ्च भासकविकृतस्य दूतवाक्याभिधसंस्कृतरूपकस्य तथा कविप्रवर-वङ्किमचन्द्रकृतानन्दमठस्य वङ्गभाषामयस्य नाट्यरूपेण परिणमितस्याभिनयः कृतः। तत्राभिनेयवस्तुनोर्द्वयोरेव तथा प्रकर्षेणाभिनयः कृतो विद्यार्थिभिः येन वहव एवाभिनेतारः सामाजिकैरान्तरिकश्रद्धानिवेदनेन सुतरामभिनन्दिता अभूवन्।

तृतीये दिवसे महता समारम्भेण भारतीयप्राचीनसंस्कृतिपरिषदः प्रबन्धः कृतः। तत्र सुप्रसिद्धा ऐतिहासिकप्रवराः श्रीयुतयदुनाथसरकारमहाभागा आध्यक्ष्यमाश्रितवन्तः।

रोमकविश्वविद्यालयीयसंस्कृतप्रधानाध्यापकानां टुचीनाम्नां महामनीषिणां सत्यपि समागमसन्देशे कारणान्तरेण तदनुपस्थित्या प्रधानातिथिपदे लण्डनविश्वविद्यालयीयसंस्कृताध्यापका राइल्याण्डस्नामानो मनीषिणो वृता आसन। सम्भावितसमागमाः प्यारिस् विश्वविद्यालयस्य संस्कृतविद्याप्रधानाध्यापका 'रेणु' नामानो मनीषिणोऽपि कारणान्तरेण नोपस्थिता अभूवन।

तत्र डाक्तार-श्रीसुशीलकुमारदे-डाक्तार-श्रीसत्यचरणलाहाप्रभृतीनामन्येषाञ्च मनीषिणां गभीरार्थप्राचीनतत्त्वनिवेदकान्यभिभाषणानि लोकानां प्रीतये विशेषविज्ञानाय च पर्यकल्पन्त।

चतुर्थदिवसे पण्डितमहासम्मेलनं समजनिष्ट। तत्र वर्तमानसंस्कृतवित्समाजेषु वयसा विज्ञानेन च ज्येष्ठा महामहोपाध्यायपदभाजः श्रीयुतचण्डीदासन्यायतर्कतीर्थमहोदयाः सभापतिपदमलङ्कृतवन्तः। प्रधानातिथिपदे च अस्यैव महाविद्यालयस्य प्राक्तनाध्यापका वयोविज्ञानवृद्धाः श्रीयुतवनमालिवेदान्ततीर्थमहोदया वृताः।

तत्र महामहोपाध्याय-श्रीयुक्तहरिदाससिद्धान्तवागीश-महामहोपाध्याय-श्रीरमेशचन्द्रतर्कतीर्थ-श्रीयुतयोगेश्वरीसरस्वती-डाक्तार--श्रीयतीन्द्रविमलचतुर्धुरीण-श्रीनित्यानन्दस्मृतितीर्थ-स्वामिसुन्दरानन्द--श्रीअजितकुमारस्मृतिरत्नप्रमुखा विद्वांसो विविधप्रतिष्ठानपक्षाश्रिताः संस्कृतविद्यायास्तथा प्राचीनसंस्कृतीनां तत्त्वानि प्राशस्त्यञ्च सम्यगुपपादितवन्तः। अनन्तरञ्च सुतरां वयोवृद्धतया स्वाभिभाषणं स्वयं पठितुमसामर्थ्येन तदनुमत्या तदीयान्तेवासिभिः महामहोपाध्याय-श्रीयोगेन्द्रनाथतर्कवेदान्ततीर्थैस्तदीयं मितञ्च सारञ्च संस्कृतभाषामयमभिभाषणं पठितम्। तच्च पत्रिकायामस्यां प्रकाशयिष्यते।

अथ तद्दिवसीयद्वितीयसभा प्रवृत्ता, यत्र महाविद्यालयस्यास्य प्राक्तनवर्त्तमानाध्यापकानां तथा प्राक्तनवर्त्तमानविद्यार्थिनां महामोदप्रदं सम्मेलनमजनिष्ट। तत्र महाविद्यालयस्यास्य प्राक्तनछात्रास्तथा प्राक्तनाध्यापकाः श्रीमन्तो महामहोपाध्याय-योगेन्द्रनाथतर्कवेदान्ततीर्थमहाभागा अध्यक्षपदं परिगृहीतवन्तः।

तत्र प्रेसिडेन्सीमहाविद्यालयस्य भूतपूर्वप्रधानसंस्कृताध्यापकाः श्रीमन्तः शिवप्रसादभट्टाचार्य-एम्-ए-महोदयाः श्रीदीनेशचन्द्रगुहतर्कादितीर्थ-प्रभृतयश्चानेके सारवता प्रवचनेन सभायां महतीं प्रीतिमुदपादयन्। अथ सङ्गीतविद्याविशारदेन श्रीदिलीपरायमहोदयेन नानाविधसङ्गीतकलानुशीलनेन परितर्पिताः सर्वे सामाजिका रायमहोदयस्य महतीं प्रशस्तिमन्तःकरणप्रीत्या समुदघोषयन्।

अथ पञ्चमे दिवसे प्रातरेव नवमघटिकावादनावसरे सभा संघटिता। तत्र महाविद्यालयस्यास्य परिचालकसमितेरध्यक्षाः सुप्रसिद्धव्यवहाराजीवाः श्रीअतुलचन्द्रगुप्तमहाभागा अध्यक्षपदमध्यासत, प्रधानातिथिपदञ्च पश्चिमवङ्गप्रदेशपालाः श्रीमन्ता डाक्तार-कैलासनाथकाटजुमहाभागाः। अथ प्रथमतो 'वन्दे मातर'मित्यादिसुप्रसिद्धसङ्गीतगानानन्तरं वेदरत्न श्रीदेवानन्दझामहोदयैः वैदिकमन्त्रपाठेन कृतं मङ्गलाचरणम्, ततो महामहोपाध्याय-श्रीकालीपदतर्काचार्यमहोदयैः पठिताः स्वरचिता गीर्वाणवाणीमयाः कलिकाता-संस्कृतमहाविद्यालयप्रशस्तिश्लोकाः। येषामत्रैव पत्रिकायां कृतः प्रकाशप्रबन्धः। अथ संस्कृतमहाविद्यालयस्य तदानीन्तनाध्यक्षाः डाक्तार-श्रीयतीन्द्रविमलचतुर्धुरीणमहोदया महामहोपाध्याय-श्रीयोगेन्द्रनाथ-तर्कवेदान्ततीर्थमहोदयाश्च वचनप्रपञ्चेन सभ्याननुरञ्जितवन्तः।

अन्ते च सभापतिमहोदयानां प्रधानातिथिमहोदयानाञ्च सुललितं गभीरार्थञ्च भाषणमभूत।

प्रधानातिथयः प्रदेशपालाः स्वीये प्रवचने संस्कृतभाषायां सर्वथा राष्ट्रभाषापदाधिकारयोग्यतां सविस्तरं सोपपत्तिकञ्च तथा प्रतिपादितवन्तो यथा तत्रत्याः सर्व एव संस्कृतविदः परमां प्रीतिं महतीमाशाञ्च चित्ते समासेदुः।

अथ वैद्यप्रवरश्रीरामचन्द्रमल्लिकसांख्यतीर्थमहोदयानां साधुवादविज्ञापनानन्तरं जातीयसङ्गीतगानेन समाप्तो महोत्सवः।

# भतभूतिकालिदासतत्त्वम्

[ निबन्धिका—श्रीमती वाणीराणो सिंहजा ]

( पूर्वानुवृत्तम् )

अहो ! साधु स्वाधीनभारतस्य प्रशंस्तचेतसां भूभृतां विदग्धबहुमाननम् । तथा बन्धनविहीनाया देशभूमातृकाया अङ्कालङ्कारकाणां कोविदवराणाम् आविर्भावश्च । अप्रासङ्गिकत्वेऽपि प्रलापयति मां दुर्निवारो मनोजवः । यत् संप्रति स्वाधीनभारतभूजनन्याः सर्व एव सन्तानगणः वैदेशिकशासनस्य दृढ़बन्धनेन जर्जरितः हृतसर्वस्वो हृतसामर्थ्यः प्राचीनेतिवृत्तपर्यालोचनजया प्रेरणया पुनरुज्जीवितो हृतगौरवं लुप्तमर्यादं भारतमुद्धर्त्तुमाप्राणं यतते ।

भवभूतिविरचितेषु ग्रन्थेषु त्रीणि नाटकानि विश्वसाहित्यसंसदि विशिष्टस्थानमधिकुर्वत इति अविसंवादि मतम् । तानि तु वीरचरितोत्तररामचरित-मालतीमाधवानीति । एतेषु पुनश्चरमोत्कर्षव्यञ्जकम् उत्तररामचरितमेव । आचार्यभवभूते रचनावैदग्ध्यं तथा वैशिष्ट्यं नान्यकविसुलभम् । एतादृक्साहित्यपरिकल्पना न केवलं तत्रभवतः स्वकीयनैपुण्यप्रभवा, परम् अनुभवसम्भवापि । संस्कृतसाहित्येषु करुणोज्ज्वलादिरसानां युगपत सन्निवेशाधिक्यं प्रायशो नालोक्यते । दृश्यन्ते नाटकरचनाः प्रायशो घटनाबहुलाः । एतदृते दृश्यकाव्यं निर्विषयं प्रविरलविषयं वा स्यात । किन्तु उत्तररामचरितं नाम नाटकं घटनाविरलमपि रचनानैपुण्येन इतिवृत्तस्य प्रत्यग्रत्वं प्रकटयतीव । इयमेव जातुकर्णीतनयस्य अनन्यसामान्या अभूतपूर्वा प्रतिभा । परिदृश्यमानजगति प्रतिस्थानं वर्णनीयं सदसद्वस्तुजातं विराजते । महाकविः कालिदासस्तद्दृश्यमधुरिमानं साफल्येन निर्वर्ण्य चित्रवर्त्तिकां विना केवलं लेखनीमात्रसहायो मसीमयैरक्षरैर्यथास्थानं सन्निवेश्य आत्मनो नाटकचित्रं शिल्पचातुर्येण रञ्जयामास । परं नाद्यापि स्तोकमपि तच्चित्रस्यौज्ज्वल्यं हीनवर्णत्वमितम् । ( क्रमशः )

# Sanskrit Sahitya Parishat Series

(Corrected up to April, 1946)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Almost out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhanta-bhushan. As 10 ; As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshina-charan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kali-pada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4 ; Re. 1 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshina-charan Bhattacharya. Re. 1-4 ; Re. 1 (for members).

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satish-chandra Siddhantabhushan. As. 8 ; As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D.As. 12 ; As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 7 ; As. 5 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamaho-padhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4 ; Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 6 ; As 5. (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M.A. As. 12 ; As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarka-charya. Re. 1 As. 4 ; Re. 1 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarka-charya. Rs. 2 ; Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1. ; As. 12 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 2 As. 8 ; Rs. 2 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof. Akshayakumar Shastri. Re. 1 As. 4 ; Re. 1 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12 ; Rs. 3 (for members). [Almost out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 3. As. 8 ; Rs. 3 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. As. 10 ;As. 8 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 ; As. 12 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 6; 5 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 4

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 2 As. 8; Rs. 2 As. 4 (for members).

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXI. | March 1949

No. 11. | १८७०-शकीये

३१श-वर्षस्य | फाल्गुने

११श-संख्या | मासे

भारते मातु भारती

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६।
Foreign price—14s.

# SOME BACK VOLUMES

OF THE

## Sanskrit Sahitya Parishat Patrika

AVAILABLE FOR SALE

*Price* :—Volumes upto 10th year Re. 1/- per copy
,, From 11th to 20th year /10/- per copy
,, ,, 21st to 30th ,, ,, /6/- ,, ,,

(Postage and Packing charges to be paid extra.)

*Apply to the Secretary,*

SANSKRIT SAHITYA PARISHAT

17, R. G. Kar Road,
P.O.—Shyambazar, Cal. 4

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥

Vol. XXXI, No. 11. | १८७०-शकीये फाल्गुने ३१श-वर्षस्य ११श-संख्या | March, 1949.

## श्रौतसूक्तिः

उष आ भाहि भानुना चन्द्रेण दुहितर्दिवः ।
आवहन्ती भूर्यस्मभ्यं सौभगं व्युच्छन्ती दिविष्टिषु ॥

---

तदनुवर्त्तिनी

## लौकिकसूक्तिः

सौभाग्यधारा ददती दिवा न-
स्तमःसमूहानपि संहरन्ती ।
उषो दिवः पुत्रि सुखप्रदेन
प्रकाशमायाहि खरांशुना त्वम् ॥

---

# मतिमञ्जरी

मान्याः पारिषदाः! चिरात प्रभृत्येव नास्ति श्रीमतामप्यविदितं यदस्य भारतवर्षस्य स्वरूपमन्यादृशमिव संवृत्तमिति। नाद्यतनाः श्रौत-क्रियाकलापेषु विश्वसन्ति, स्मार्त्तेषु विधानेषु नानुरागं वहन्ति, नेतिहास-पुराणपिशुनितेषु सद्वृत्तेषु रमन्ते, नापि पुरुषपरम्परागतशुभाचारेषु नितरां रतिमासादयन्ति। तेन तेनैव च निदानेन कलिकालस्यातिनिदारुणः समनु-भूयते परिणामः। पृथक्तया कारणविचारमकृत्वा वर्त्तुलतया कारण-विचारः क्रियते चेत श्रुतिशास्त्रेष्वविश्वास एवात्र मूलं निदानमिति शक्यते व्यपदेष्टुम्। प्रथमतस्तावत सुचिरादूर्द्धं श्रुतिशास्त्रस्य सम्प्रदायक्रमेण श्रुतिपरम्परयैव लब्धप्रचारस्य केचन भागाः समुच्छिन्ना येषामंशविशेषा अद्यापि दृश्यन्ते समनुवृत्ताः स्मृत्यादिशास्त्रेषु, तेनैव चानुमानं भवत्यमीषाम्, अत एव श्रुतिशास्त्रं प्रत्यक्षमनुमितञ्चेति द्विविधमुपदिष्टं तन्त्रकारैः। तथा ह्यासमुपेतस्यापि श्रुतिशास्त्रस्य सुचिरं कालं यावद् भारतवर्षे भूयसा लब्धप्रचारस्य सम्मानितस्य श्रुतिपरम्परामनुवर्त्तमानस्य दृष्टो यावान महिमा, तावानद्य कालप्रभावाद्वा सुतरामामुष्मिकतत्त्वेषु श्रद्धाविरहाद्वा लौकिकाभीष्टपदार्थमात्रेषु निःशेषं चित्तविश्राणनाद्वा नास्तिकाभिमतेषु मतेषु दृढश्रद्धावेशाद्वा सोपपत्तिकवचनसञ्जातप्रेमभूम्ना निरुपपत्तिक-प्रभुवचनसम्मितवचनव्रातेषु प्रत्ययात्ययबलाद्वा कारणान्तराद्वा नैव समुप-लभ्यते मानवसमाजेषु। यावतकालं यावद् भारतवासिनां श्रौतेषु विधानेषु सुदृढा श्रद्धा समवर्त्तिष्ट, श्रुतिशास्त्रपारङ्गमेषु जनाः सम्मानातिशय-मकुर्वन्, नानाफलनिर्वर्त्तकतया श्रौतविधानानि लोकानामनुष्ठानगोचरतां नात्य-वर्त्तयन्, धर्माद्यतीन्द्रियवस्तुविज्ञानाय श्रुतिमेवालम्बनममन्यन्त, स्मृत्यादी-नाञ्च धर्मादिषु प्रमाणभूतानां तन्मूलकत्वेनैव प्रामाण्यमभ्युपागमन् तद्-विरोधिनाञ्च तेषामप्रामाण्यं, तावतकालमेव सुमहानासीत् प्रचारः श्रुति-शास्त्रस्य तन्मूलानाञ्च विविधतन्त्राणां तथा सदाचारादीनाम्। तदानी-

मर्थतः स्वरूपतश्च वेदाध्ययनार्थं तपोवनेषु ग्रामेषु पत्तनेषु च संख्यातीता वेदविद्यालयाः प्रतिष्ठिता आसन, धर्मशास्त्रविदामसंख्यानि स्मार्त्तविद्यायतनान्यभूवन, गृहे गृहे प्रवयसो वृद्धाः पुरुषा महिलाश्च सदाचारविदः सदाचारमुपदिश्य धर्मानुगतां सामाजिकव्यवस्थामभितः सम्यगस्थापयन। वेदविद्यामनुशीलयतां कण्ठात सम्यगुच्चारिताः श्रौतमन्त्राः श्रुतिमार्गणान्तः सम्प्रविश्य मानसं मलमक्षालयन, सामसङ्गीतं गायतां सुमधुरा पूता स्वरझङ्कृतिः परिप्लाव्य गगनमार्गमनर्गलामभितः ससर्ज महापवित्रतां सहैवान्तःकरणतत्त्वान्याक्रामता सन्तोषेण। कति नाम तदा कालभेदेन देशभेदेन च विभिन्नरूपा वेदमन्त्रव्याख्यातारः प्रादुरभूवन। तेन च कति वा विभिन्नाः सम्प्रदाया भारते वर्षे समुदपद्यन्त। किन्तु साम्प्रतं प्रदेशान्तरेषु सत्यपि कथञ्चित स्वल्पे वेदस्वरूपार्थप्रचारे वङ्गेषु सुतरामेव विपर्यस्तो लक्ष्यते। यत्र हलायुधरामकृष्णप्रभृतयो वैदिकपरिवृढा वेदार्थानुपदिशन्तः सन्तमसमान्तःकरणिकमुपशमयाञ्चक्रुः, तत्रैवाद्य का कथा वेदार्थोपदेशस्य, का वा कथा वैदिकमन्त्रार्थविशेषविज्ञानस्य, वर्णतः स्वरतो वा विशुद्धमुच्चारणमपि सुदुर्लभं वैदिकमन्त्राणाम्। तदिदानीं सर्वेषामेव प्रदेशानां विशेषतश्च वङ्गप्रदेशस्य वेदप्रचारे कर्त्तव्यो भूयान यत्नः। यथा तत्र तत्र बहवो वेदविद्यालयाः सम्भवेयुः तथा तेषु विद्यालयेषु वेदनिष्णातानामुपदेशपरम्परया वेदविद्यार्थिनः सम्यक्तया वेदानामर्थेषु स्वरूपेषु च विनीताः स्युः, तदिदमतिप्रयत्नेन विधातव्यम्। एवं कृते यदा वेदाः सुगृहीता भविष्यन्ति, तत्साहायकेन प्राचीना संस्कृतिः सुतरां लब्धप्रचारा लोकानां चित्ते दृढमारूढा मालिन्यमपसारयिष्यन्ति, शास्त्रान्तरप्रतिभादिसमन्वयेन वेदार्थाः सर्वे सोपपत्तिकाः प्रतिभास्यन्ति, तदैव पुनरस्य भारतवर्षस्य प्राक्तनं पूतं स्वरूपमाविर्भूतं स्यात। तत्तदर्थं प्रेक्षावद्भिराधेयः सर्वथा प्रयत्नभूमा।

---

# शब्दानाम् अपप्रयोगाः

[ श्रीदुर्गामोहनभट्टाचार्यकृतवङ्गभाषामयनिबन्धस्यांशिकानुवादः ]

( पूर्वानुवृत्ताः )

पूर्त्तविभाग इत्ययं शब्दो बहुकालं यावत Public Works Engineering Deparment इत्यस्य प्रतिशब्दरूपेण व्यवह्रियते। प्राचीने काले धर्मार्थिनो गृहस्था इष्टापूर्त्तकर्मानुष्ठानेन पुण्यसञ्चयमकुर्वन्। इष्टशब्देन देवतोद्देशेन यागो दानञ्च प्रतीयेते स्म। पूर्त्तशब्देन च जीवोद्देशेन कूपादि-खननं मन्दिरप्रतिष्ठा अन्नदानम् उद्यानरचना च प्रत्यपद्यन्त। ग्रहणादिक-मुपलक्ष्य दानमपि पूर्त्तकर्ममध्ये परिगणितमभूत। पूर्त्तकर्म ऐकान्त्ये नैव धर्मकृत्यं, पुष्करिणीखननेन साकं मन्दिरप्रतिष्ठान्नदानार्थदानादि कर्माण्यपि पूर्त्तकर्मान्तर्भूतानि। तस्मात् Public Works इत्यस्य अथवा Engineering इत्यस्यार्थे पूर्त्तविभाग इति शब्दस्य प्रयोगो न सुसङ्गतो जातः। तदर्थे वास्तुपदप्रयोगः सुतरामुपयुक्तः।

वास्तुशब्देन न केवलं वासभूमिरेव प्रतीयते। कौटिल्यस्य अर्थशास्त्रे वास्तुकनाम्ना त्रयोऽध्यायाः सन्ति। तत्र दृश्यते, यथा—गृहं क्षेत्रं उद्यानम् सेतुः तरागः आधार इत्येतानि सर्वाण्येव वस्तूनि वास्तुपदाभि-धेयानि। जलनिर्गमपथः मलमूत्रस्थानं पथिसंक्रम इत्यादयोऽपि पदार्था निरुक्तेषु त्रिष्वध्यायेषु व्याख्याताः। वास्तुविद्यायां सुप्रसिद्धस्य 'मानसार' ग्रन्थस्यानुसारेण भूमिप्रासादमण्डपसभाशालाप्रपारङ्गशिविकारथमञ्चासन-प्रभृतीन्यपि वस्तूनि वास्त्वन्तर्गतानि।

... ... ... ...

अर्थशास्त्रस्य माधवयज्वा नाम कश्चित प्राचीनटीकाकारः वास्तुक-शब्दस्य 'वास्तुविद्याविद्' इत्यर्थमाह। तेन Civil Engineering वाच्य एव जनो वास्तुको वा वास्तुविद् वा वास्तुकारो वा शक्योऽभिधातुम्। Engineering पदवाच्या विद्या च वास्तुविद्येति।

व्यपदेशशब्दः साम्प्रतिकैरुपलक्ष्यार्थे प्रयुज्यते। अस्य शब्दस्य छलमित्येव स्वारसिकोऽर्थः। श्रीरामचन्द्रः सीतायां इच्छापूरणव्यपदेशेन तां वने प्रैषयदित्येतद् वाक्यं निर्दोषम्। सीता काननदर्शने स्वकीयामिच्छां प्रकाशितवती, अरण्यप्रदर्शनच्छलेन सा वने निर्वासिता। इत्येषा रामायणी कथा। किन्तु दुष्यन्तो मृगयाव्यपदेशेन वनं गत्वा शकुन्तलां लेभे इत्येवमुक्तिर्भ्रान्तिविजृम्भिता। महाभारतोपाख्याने वर्त्तते राजा दुष्यन्तो मृगयामुपलक्ष्य शकुन्तलाश्रमं प्राप, न तु मृगयां व्याजीकृत्येति। छलम्, उक्तिः, नाम, वंशः, कुलबोधकोपाधिरित्येतेषु अर्थेषु व्यपदेशशब्दस्य प्रयोगोऽस्ति। तस्य उपलक्ष्येत्ययमर्थः प्रमाणभूताभिधानग्रन्थेषु नोपलभ्यते। नापि प्राचीनैस्तदर्थे कृतस्तस्य प्रयोगो दृश्यते। वाणिज्यव्यपदेश उत्कण्ठाव्यपदेशः रोगव्यपदेशः, शिरःशूलव्यपदेशः, बन्धुदिदृक्षाव्यपदेश इत्यादयः शब्दाः संस्कृतसाहित्ये प्रयुक्ताः सन्ति। सर्वत्रैव छलमिति व्यपदेशपदस्यार्थः। उपलक्ष्येत्यर्थे तस्य शब्दस्य प्रयोगः सुतरां भ्रान्तिमूलक एव।

स्तिमितशब्दस्य प्रामाणिकोऽर्थ आर्द्रः धीरः अचञ्चलश्चेति। किन्तु शब्दोऽयं बङ्गभाषायामनुज्ज्वलार्थे व्यवहार्यतामारुरोह। संस्कृतग्रन्थेषु स्तिमितशब्दस्य प्रयोगबाहुल्यमुपलभ्यते। तत्रत्यप्रयोगेषु तादृशानि कतिचित् स्थलानि सन्ति येषु सममेव निश्चलार्थो निष्प्रभार्थश्च सङ्गच्छेते। भ्रमस्यावसरसत्तयैव तत्रानर्थः पदमधात्। उदाहरणेनैवास्य वस्तुनः परिष्कारो भविष्यति। रघुवंशस्य षोडशे सर्गे दृश्यते एकदा निशार्द्धे अयोध्यानगर्या अधिष्ठात्री देवता 'स्तिमितप्रदीपे' शय्यागृहे प्राविशत्। राजगृहस्य निशीथप्रदीपो निःस्पन्दशिखः प्राज्वलत् क्षीणया शिखया वा क्षीणमालोकं व्यतरदिति नैव शक्यं विज्ञातुम्। अर्थसङ्गतिमनुसृत्य तयोरेकतरा कोटिनिश्चेतव्या। तत्र मल्लिनाथः स्तिमितशब्दस्य व्याख्यानं नाकरोत्। किन्तु तस्यैव रघुवंशस्य एकोनविंशसर्गे द्विचत्वारिंशत्तम श्लोके वायुहीनप्रकोष्ठे द्वितीयस्य स्तिमितप्रदीपस्य वार्त्ता समुपलभ्यते।

तत्र कवेरभिमतार्थः स्फुट एव। मल्लिनाथोऽपि तत्र स्तिमितपदस्य निश्चल इत्यर्थमाह। तादृशार्थोपादानेनैव वर्णनायाः सुसङ्गतिर्भवति।

कालिदासस्य 'ध्यानस्तिमितं लोचनं' 'निवातपद्मस्तिमितं चक्षुः' 'विस्मयस्तिमितं नेत्रं' 'संयमस्तिमितं मनः' निवातस्तिमितः जलराशिः' 'स्तिमितप्रवाहा सरित' 'स्तिमितगतिः रथः' 'स्तिमितजवं पुष्पकम्' इत्येते सर्वे एव शब्दाः स्तिमितशब्दस्य निष्कम्पार्थं प्रकाशयन्ति।

( क्रमशः )

---

# उर्वशी

( कविरवीन्द्रनाथकृताया 'उर्वशी' कविताया अनुवादरूपा )

[ निबन्धकः—श्रीविष्णुपदभट्टाचार्यकाव्यतीर्थः ]

नो माता नासि कन्या न च भवसि बधूः कस्यचिद्वा कदाचित
हे रूपावासभूमे दिविषदुपवनस्थोर्व्वशि श्रेयसि त्वम्।
गोष्ठे श्रान्ताथ सन्ध्या समवतरति यत कृष्टहेमाञ्चलान्ता
गेहप्रान्ते तदा नो क्वचिदपि कुरुषे सान्ध्यदीपस्य दानम्॥
द्वैधीभावप्रभावाद् विजड़ितचरणैर्वक्षसा कम्पभाजा
नम्रैर्नेत्रोपपातैः स्मितहसितरुचा स्तब्धरम्यार्द्धरात्रे।
कान्तागारेऽप्यथाद्यां कुसुमविरचितां नैषि शय्यां सलज्जम्
ऊषेवाप्तोदया त्वं न भवसि सुभगे गुण्ठिता कुण्ठिता वा॥
त्वं फुल्ला स्वप्रकाशोर्व्वशि कथय कदा वृन्तपुष्पोपमाना
वासन्ताद्यप्रभाते मथनमधिगतात सागरादुत्थिताभूः।
दक्षे पाणौ सुधाढ्यं चषकमभिनवं संवहन्ती सलीलं
सव्ये हस्ते तथान्यद्विषरस-सहितं भाण्डकं धारयन्ती॥
अम्भोधिर्मन्त्रशान्तो भुजग इव महान उच्छ्वसद्वीचिभोगैः
कोटीशस्ते लुलोठाङ्घ्रियुगतलगतो नम्रतामभ्युपेत्य।

कुन्देन्दुक्षीरशुभ्रा विगलितचिकुरा नम्रकान्त्याभिरामा
तन्वङ्गी निर्ज्जरौघाधिपतिसुमहिता राजसेऽनिन्दिता त्वम् ॥
प्रत्यग्रं यौवनं तद् विरतिविरहितं संवहन्त्युर्व्वशि त्वं
नैवाभूः किं कदाचिल्ललितमुकुलिका बालिकेवावयस्था ।
स्थित्वैका कस्य गेहे जलधितलगते गाढगाढान्धकारे
माणिक्यैर्मुक्तिकाभिः शिशुजनरुचितं क्रीडितञ्चातनिष्ठाः ॥
कक्षे सम्यक् प्रदीप्ते मणिगणरचितैर्दीपकैः कर्णयित्वा
कल्लोलं गीतभूतं जलनिधिविहितं पूतहास्याञ्चितास्या ।
पर्यङ्कं वैद्रुमं तत् समधिगतवती कस्य वाङ्केऽभ्यशेथाः
संफुल्लाभूः कृतेव प्रतिनववयसा जागरित्वैव विश्वे ॥
प्रेयस्येकासि विश्वे निरवधिसमयादुर्वशि त्वं सुरम्ये
भक्त्या ध्यानं मुनीन्द्रैरभिमतममलं तत्फलञ्चार्जितं तैः ।
तप्त्वा तीव्रं तपस्ते चरणयुगतले दीयते तत्समग्रं
क्षिप्तैस्ते तैः कटाक्षैस्त्रिभुवनमखिलं चञ्चलं यौवनेन ॥
सौरभ्यं मादिरं तेऽवयवपरिगतं प्राप्य वायुस्तथासा-
वन्धीभूतः समन्तात् प्रवहति मधुना षट्पदो वा प्रमत्तः ।
प्रोद्दामैर्गीतकैस्त्वामनुसरति कविर्लुब्धचित्तो विमुग्धो
विद्युल्लोला प्रयासि प्रचलितवसना नूपुरं गुञ्जयन्ती ॥
लोलैर्हिल्लोलसार्थैस्तुलनमधिगतैर्वोर्वशि त्वं यदैषा
गोष्ठीमध्ये सुराणां प्रकटितपुलका नृत्यसि प्रोल्लसन्ती ।
मध्ये सिन्धोस्तदानीं त्वदनुकृतिरता यान्ति नृत्यं तरङ्गाः
वस्त्रान्तश्चैतिभूमेश्चपलचपलतां शस्यशीर्षप्रकम्पैः ॥
तारैका तारहारात् स्तनतटवसतेर्विच्युता ते नभोऽङ्के
वक्षोमध्येऽथ पुंसो भवति खलु मनो ह्यात्मविभ्रान्तमेव ।
धारारक्तस्य काचिद्वहति सुमहती तत्र नृत्यं चरन्ती
नीवीबन्धो दिगन्ते झटिति विगलितो जायतेऽसंवृते ते ॥

स्वर्गस्यैवोदयाद्रौ भवसि ननु शुभे मूर्त्तिमात्प्रोषसः श्रोः
पुंसां चेतांसि सम्यग् भुवनतलजुषां मोहयन्त्युर्वशि त्वम् ।
विश्वस्याश्रुप्रवाहैस्तनुगततनिमा ते वनास्ते विधौतो
हृद्रक्तैश्च त्रिलोक्याश्चरणयुगगतं शोणिमा तेऽङ्कितोऽसौ ॥

लोलैः केशैर्विमुक्तैर्वसनविरहितं बिभ्रती स्वं नितम्बं
विश्वेषां वासनाभिर्निपुणविरचिते फुल्लरम्यारविन्दे ।
संन्यस्यैव स्थिता त्वं त्वदतिलघुभरं तावकं पादपद्मं
विश्वात्मस्वर्गरङ्गे नटसि चिरमयि स्वप्नसंलभ्यसंज्ञे ॥

त्वामुद्दिश्य प्रकामं दिशि दिशि रुदितो रोदसी कर्णयैतत्
नैष्ठुर्यं संप्रपन्ना विषमबधिरता दोषभागुर्वशि त्वम् ।
नैवावर्त्तिष्यते किं पुनरिह जगति प्रत्नमाद्यं युगं तत्
किंवा नोत्थास्यसि त्वं तटतलरहितात् सागरात् सिक्तकेशैः ॥

प्रत्यूषे त्वादिभूते प्रतनुतनुरसौ दर्शनं सम्प्रदाता
सङ्गीतैः स्वैरपूर्वैर्झटिति जलनिधिश्चोत्तरङ्गो विभाता ।
सर्वाङ्गं तावकीनं रुचिरविरचितं क्रन्दिताहो तदानीं
तीव्राघातैर्मुहुस्तैर्निखिलजनदृशां वारिबिन्दून् निपात्य ॥

नेष्यत्यावर्त्तिता वा जगति पुनरसौ सम्प्रयातश्चिराय
सोऽस्तं हा गौरवेन्दुर्वसतिमधिगतास्ताचले चोर्वशि त्वम् ।
आनन्दोच्छ्वासजालैः सुरभिसमयजैस्तेन मन्ये विमिश्रो
दीर्घश्वासो धरायां चिरविरहकृतो वाति कस्यापि चाद्य ॥

भासन्ते हासपूर्णा यदिह दश दिशः पौर्णमास्यां निशायां
तद्दूरात् कापि कस्मात् स्मृतिरतिमधुरं व्याकुलीकृत्य चेतः ।
वंशीनादं विधत्ते पतति नयनयोरश्रुराशिः प्रसर्पन्
आशा जागर्त्ति चैका तदपि हि रुदिते जीवितस्य प्रमुक्ते ॥

अखिलभारतवर्षीय-देवभाषापरिषदः सप्तदशमहाधिवेशने
सभापतिपदमलङ्कुर्वतां
महामहोपाध्याय-श्रीचिन्नस्वामिशास्त्रिणाम्

# अभिभाषणम्

सरस्वति प्रेदमव सुभगे वाजिनीवति ।
तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः
॥१॥ मं० सं० तै०

यस्ते स्तनश्शयो यो मयोभूः येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यस्सुदत्रः सरस्वति तमिह धातवेकः ॥२॥
(ऋ० सं० १-१६४-४९)

यस्माद्भूद्विश्वमिदं विचित्रं यस्मिन स्थितं यत्र लयं प्रयाति ।
तत् सच्चिदानन्दघनैकरूपं ब्रह्माद्वयं निर्गुणमानतोऽस्मि ॥

एषामहं समासीनानां वर्चो विज्ञानमाददे ।
अस्यास्सर्वस्यास्संसदो मामिन्द्र भगिनं कृणु ॥
यद्वो मनः परागतं यद्बद्धमिह वेह वा ।
तद्व आवर्तयामसि मयि वो रमतां मनः ॥ (अथर्ववेद ७-१२-३-४)

मान्यतमा विपश्चिदपश्चिमा अनवद्यविविधविद्योदधिविलोडनसमासादित-विमलविज्ञानसुधास्वादननिर्वृतनिजान्तःकरणाः पारिषदाः, अन्ये च सभा-स्ताराः, प्रेयांसो वरीयांसश्च !

किमु वर्णयामि प्रेम्णः परं पारमधिगतस्य भावत्कस्य गरिमातिशय-मनितरसाधारणम्, येनाहं महिमैकधामनि पदेऽस्मिन् सकृन्निर्व्यूढभारोऽपि पुनरनलङ्कर्मीणोऽप्यारोप्ये सत्स्वपि बहुषु मत्तः परमेषु धिषणधीसमधिषणेषु विबुधवरेषु । तेनाऽऽत्मानं धन्यं मन्वान आतन्वानश्च हार्दिकीं कृतज्ञता-माविष्कुर्वन् परश्शतान् धन्यवादान्, अनुसन्दधाम्यनन्तरकरणीयमत्रभवद-नुशासनसाफल्याय ।

सभाजनीहास्सभासदः !

वयमत्र भगवत्या भागीरथ्याः पवित्रतमपवनपरिपावित्ते चन्दननगरे समवेता अद्य भगवत्यास्सुरभारत्याः प्रकृष्टतमां प्राचीनां पुनः समवस्थामानेतुम्, तदौपयिकानुपायान् परिचिन्त्योपादातुम्, अपायांश्चापकर्तुम्। इदञ्चाविवादाध्यासितमनपलपनीयमागोपालबालमभ्युपगतं तत्त्वम्, यदियममरवाणी न केवलमस्मिन् भारते वर्षे, वर्षान्तरेष्वपि परस्सहस्रेभ्यः प्रागपि वत्सरेभ्यः प्रसार्य स्वीयं पदं, तांस्तान् देशविशेषानभिव्याप्य तिष्ठन्ती वहुत्र प्रसरमुपेयुषी भारतीयैं राजभी राज्यकार्यपदेऽप्यभिषिक्ता धुरं तां दुरन्तामपि साधु निर्वहति स्मेति। यतो हि राज्यकार्यनिर्वहणोपयुक्तास्सर्वेऽपि विधिनियमनिषेधप्रतिप्रसवाभ्यनुज्ञादयो विषया अस्यामेव सुरगव्यां सुनिबद्धा मनुयाज्ञवल्क्य-व्यासपराशरप्रभृतिभिः प्राचीनैर्महर्षिभिः। एते हि साक्षात्कृतधर्माणो मुनयो वीतरागा नात्मयशःख्यापनाय वा अन्यस्मै कस्मैचिदात्मप्रयोजनाय वा ग्रन्थानिमान् स्मृतिपुराणादीनरीरचन्। किन्तु प्राणिमात्रहिताय जनिमतां दुःखदुरितनिबर्हणाय उभय्या अपि लोकयात्रायास्सुखनिर्वाहणाय च। अतो व्यवहारोपयिकानां शासनप्रणालीप्रतिपादकानां ग्रन्थरत्नानाममीषामस्यां भाषायां सङ्कलनं भाषाया अस्या आनृपतिकुलमा च पामरगणमप्रतिहतं प्रचारमनुमापयति। यदि राज्यधुरो निर्व्योढारो नृपतयस्तत्समयवर्तिनो नैनां भाषामवाभोत्स्यन्त राजशासनग्रन्था न कदापि गैर्वाण्यां वाण्यां प्राणेष्यन्त। यदि नाम तादात्विकं समग्रभारतव्यापि भाषान्तरमवर्त्तिष्यत तदेव तैर्महर्षिभिर्जनहिताय सुखेन जनावबोधनाय चोपायोक्ष्यत, यथाद्यत्वे। नहि मौलिकानि शासनतत्त्वानि व्यावहारिकाश्च विषया लोकमात्रोपयोगिनो, विधिनियमनिषेधाश्चास्यां सुरभारत्यामिवान्यत्र भाषान्तरेषु भारतीयेषु सुनिबद्धा दरीदृश्यन्ते। क्वचित् क्वचिदुपलब्धिस्तु अनन्तरकालिकानुवादप्रसूता न मौलिकतामनुभवितुमीष्टे।

अधिकरणेष्वपि भाषैव व्यवह्रियते स्म राजकार्याय। क्रय-विक्रयदानादिपत्राणां यो लेखनप्रकारनियमादिर्योगीश्वरेण याज्ञवल्क्येन निरूपितः "पटे

वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् । अभिलेख्यात्मनो वंश्यान आत्मानं च महीपतिः" इत्यादिना तमन्यूनातिरिक्तमनुसृत्य तैस्तै राजभिः परश्शतानि दानादिशासनपत्राणि गीर्वाणभाषायां लिखितान्यद्याप्युपलभ्यन्ते तत्र तत्र । तेषु द्वित्राणां स्वरूपं संगृहीतमधो निरूप्यते निदर्शनार्थम् :—

१ श्रीमद्धारावस्थितैरस्माभिः स्नात्वा चराचरगुरुं भगवन्तं भवानीपतिं समभ्यर्च्य, संसारस्यासारतां दृष्ट्वा "वाताभ्रविभ्रममिदं वसुधाधिपत्यम् आपातमात्रमधुरो विषयोपभोगः । प्राणा अपीह जलबिन्दुसमा नराणां धर्मस्सखा परमहो परलोकयाने ।। भ्रमत्संसारचक्राग्रधाराधारामिमां श्रियम् । प्राप्य ये न ददुस्तेषां पश्चात्तापः परं फलम्" । इति जगतो विनश्वरत्वरूपमाकलय्य, उपरिलिखितग्रामोऽयं स्वसीमातृणगोचरगव्यूतिपर्यन्तः सहिरण्यभागभोगः सपरिकरः सर्वादायसमेतश्च श्रीअमरेश्वरे पट्टशाला ब्राह्मणेभ्यो भोजनादिनिमित्तं मातापित्रोरात्मनश्च पुण्ययशोऽभिवृद्धयेऽदृष्टफलमङ्गीकृत्य चन्द्रार्कार्णवक्षितिसमकालं यावत् परया भक्त्या शासनोदकदानपूर्वकं प्रतिपादित इति मत्वा तन्निवासिपट्टकिलजनपदैः यथा दीयमानभागभोगकरहिरण्यादिकं देवब्राह्मणभुक्तिवर्जम आश्रावण ( आज्ञापन )-विधेयैर्भूत्वा सर्वमेभ्यस्समुपनेतव्यम् ।...जयसिंहस्य सं० १११२ आषाढ़ वदी स्वयमाज्ञा ।

२ इदं विनयचन्द्रेण भानुचन्द्रस्य सूनुना । शासनं राजसिंहस्य लिखितं स्वमुखाज्ञया । (एकादश्यां शताब्द्याम्)

३ अग्निष्टोमचयनवाजपेयपौण्डरीकबहुसुवर्णाश्वमेधावभृथस्नानपवित्रीकृतशिरसां चलक्यानां ( चालुक्य इति प्रसिद्धानां ) वंशे संभूतः शक्तित्रयसम्पन्नः चलक्यवंशाम्बरपूर्णचन्द्रः इत्यादिकं पत्रं षष्ठ्यां शताब्द्याम् ॥

४ रुद्रदाम्नस्तु दानपत्रं द्वितीयायामेव शताब्द्याम्। [सर्वमिदं श्रीमद्भिः शिवराममूर्तिमहोदयैरवगमितमिति तेभ्यः कृतज्ञतां महतीं प्रकाशये] । (Superintendent of Archaelogical Musium, Calcutta)

रीतिरियं यावत्पयन्तं भारतस्यास्य देशस्य समग्रशः खण्डशो वा

धुरंधरा भारतीया नृपतय आसन तावत्पर्यन्तं प्रचलन्त्यासीत। राजानः परस्परं पत्रव्यवहारमपि गैर्वाण्या भाषयाऽकुर्वन इति प्रमाणतोऽवगम्यते। खृस्तवीयसप्तदशशताब्दीं यावदियं रीतिरास्माकीनेषु प्रचलितासीत। यद्यपि तेषु तेषु मण्डलेषु तत्तन्मण्डलीया भाषापि काचित बाह्यव्यवहारोपयोगिन्यभासिष्टेति प्रतीयते, परं सर्वमण्डलसाधारणी राजभाषा त्वियमेवासीदित्यत्र न कोऽपि विशयः। द्राविडादिभाषान्तरभाषिणः पल्लवराजा अपि सुरभारत्यामेवाऽन्यै राजभिस्सह व्यवहारमकुर्वन्निति शासनपत्रमेकं सूचयति। अतो भारतीया राजानस्सर्वेऽपीमामेव सुरसरस्वतीं राष्ट्रभाषात्वेन पर्यगृह्णन्निति विषये किमन्यत् प्रमाणमन्वेष्टव्यम्।

( क्रमशः )

---

## वृत्तवर्त्तिका

मान्याः पारिषदाः। विदितमेवेदं श्रीमतां यत् केनचिदप्रतिविधेयकारणेन बङ्गीयसंस्कृतसमितेर्वर्त्तमानवर्षीयपरीक्षासु काश्चित परीक्षा अंशतः साकल्येन वा गृहीता अप्यगृहीतकल्पा व्यर्थाः समुद्घोषिताः परीक्षाध्यक्षैरिति। ता एव परीक्षाः पुनरभिनवप्रबन्धेन वर्त्तमानवर्षीयमेमासस्य नवमदिवसात प्रभृति चतुर्दशदिवसपर्यन्तं यथाक्रमं यथाकालं सम्पत्स्यन्ते। तासु च परीक्षासु काव्यमध्यपरीक्षा केवलं बङ्गदेशगत-परीक्षास्थानेषु, काव्योपाधि( क )स्मृतिशास्त्रोपाधिपरीक्षे च सर्वत्रैव बङ्गीयसंस्कृतसमितिसम्बन्धिपरीक्षास्थानेषु परीक्षार्थिनां पुनः परिग्रहीष्यन्त इत्येष विशेषः। तत्र तत्तत्परीक्षार्थिनां परीक्षकाणां तत्तत्प्रबन्धकारिणाञ्च निःसन्देहां विशुद्धिमन्तःकरणेन वयमपेक्षामहे।

---

# Sanskrit Sahitya Parishat Series

(Corrected up to April, 1946)

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Almost out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As 10 ; As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4 ; Re. 1 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4 ; Re. 1 (for members).

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8 ; As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. As. 12 ; As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 7 ; As. 5 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4 ; Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 6 ; As 5 (for members).

13. **Pavanadutam** of Dhoyi, a court poet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M.A. As. 12 ; As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 As. 4 ; Re. 1 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1. ; As. 12 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 2 As. 8 ; Rs. 2 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof. Akshayakumar Shastri. Re. 1 As. 4 ; Re. 1 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12 ; Rs. 3 (for members). [Almost out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 3. As. 8 ; Rs. 3 (for members).

21. **Manodutam** of Vishnudasa--Ed. by Prof. Chintaharan Chakra varti, M.A. As. 10 ;As. 8 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 ; As. 12 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 6; 5 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 4

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 2 As. 8; Rs. 2 As. 4 (for members).

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17 R. G. Kar Road, Calcutta.

Reg. No. C 1073

Vol. XXXI.
No. 12.
३१श-वर्षस्य
१२श-संख्या

April 1949
१८७०-शकीये
चैत्रे
मासे

# संस्कृतसाहित्यपरिषत्

संस्कृत-साहित्य-परिषदो मासिकं मुखपत्रम्

(Monthly Organ of the Sanskrit Sahitya Parishat, Calcutta)

सम्पादकः

महामहोपाध्याय-श्रीकालीपदतर्काचार्यः

सह-सम्पादकः

श्रीरामधनशास्त्री काव्य-व्याकरण-पुराणतीर्थः

संस्कृत-साहित्य-परिषत्,
श्यामबाजार, कलिकाता।

वार्षिकमूल्यम्—रूप्यकषट्कम् ६)
Foreign price—14s.

# संस्कृतसाहित्यपरिषत्

इयं संस्कृत-साहित्य-परिषत् प्रतिभा रवेः ।
भावालोकैर्मनः-पद्मं प्रकाशयतु धीमताम् ॥


| Vol. XXXI, | १८७०-शकीये चैत्रे | April, |
| --- | --- | --- |
| No. 12. | ३१श-वर्षस्य १२श-संख्या | 1949. |


## श्रौतसूक्तिः

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥

---

तदनुवर्त्तिनी

## लौकिकसूक्तिः

सर्वे नमस्यन्त्युषसं सुदीप्तये
 यज्ज्योतिराविष्कुरुते किलैषा ।
दिवः सुतासौ शुभभूतियुक्ता
 द्वेष्टॄन् निरस्यत्यपि शोषहेतून् ॥

---

## मतिमञ्जरी

क्रमेण समपक्रान्तो वत्सरः। यामाशामुपजीव्य तदारम्भे वयं कर्मण्यभिप्रवृत्ताः, सा क्वचिन्निष्फला, क्वचिच्च गृहीतफलेति सुखदुःखयोः साङ्कर्यमनुभवामः। स्रोतांसीव तरङ्गिणीसङ्घातस्य निरन्तरं निरपेक्षं समयाः सम्प्रतियन्ति। दिवसात् परं दिवसो मासादनन्तरं मासः संवत्सरादुत्तरं च संवत्सरः समुपैति प्रतिनिवर्त्तते च पुनः पर्यायेण। प्रतिवर्षारम्भमेव वयमतीतवर्षवृत्तानि स्फुटानुभवसञ्जातसंस्कारबलेनाभिस्मरामः, स्वान्तेन पुनरनागतवर्षभाविहितशतानि कल्पयन्तः प्रसीदामः। अद्यापि व्यतीतवर्षवृत्तानि दुःखाकराणि सावसादं स्मरन्तोऽपि कृत्यानुरोधेन तमिमं चैत्तं विप्लवं मिमार्जयिषामः। व्यतीतवर्षप्रसूतहितसन्तानानुबन्धमधियन्तः शाश्वतं शरणं श्रीमन्तं भगवतश्च भूयो भूयो भक्तिमता चेतसा नमस्यामः। अशेषक्लेशनाशनः कल्याणमयो भगवानपमार्जयत्वचिरमनुकम्पया नो व्यतीतवर्षापतितवृत्तवैशसस्मृतिप्रभवं चैत्तविप्लवसम्पातमिति शम्।

---

## सुवीथीस्तुतिपञ्चकम्

[ निबन्धकः—श्रीगिरिशचन्द्रसांख्यवेदान्ततीर्थः ]

विस्मृत्य त्वां प्रणयललिते कानने गीतिहीने
हन्त भ्रान्तो, भ्रमणविरतिर्नाभवत् तृष्णया मे।
प्राप्याद्याहं चिरपरिचितां शोभनां प्रीतिदात्रीं
किं त्यक्ष्यामि स्थलकमलिनीं प्राणदां स्निग्धदेहाम् ॥१॥
क्लान्तः क्लान्तिं तव सुवदनं प्रेक्ष्य दूरीकरोमि
त्वामालिङ्ग्य स्वकमवगतं दुष्कृतं क्षालयामि।

आभाष्य त्वां गतगतिकथां कानने मांश्च लब्धां
साध्वीं त्वां मे हृदयमहिषीं सम्मदं वा लभेऽहम् ॥२॥
रुच्या बुद्धिर्विविधविषया सत्तमा लोभनीये
विद्या शुद्धा निगमविहिता भावुकेहापरस्मिन् ।
शक्तिः कार्येऽविहतगमना कामना सज्जनाना-
मस्यां देवि क विभवसुखं त्वां विना शान्तिदात्रि ॥३॥
गर्वो मानस्तदनुगमने विद्यते नात्र कश्चित्
त्वं मे प्राणाः कमलवदने वच्मि किं वा लिखामि ।
अन्तर्ज्ञानां त्वमतिनिपुणा त्राहि मां दाहभीतेः
कान्तः कान्तां हृदयनिहितं ख्यायते नापरां किम् ॥४॥
सौम्ये सौम्यं प्रियसहचरी दुःखदैन्यातिरिक्तं
गन्धैः पुष्पैः सततरमणं शाश्वतं देवभोग्यम् ।
प्रीत्या धौतं सुकृतमयि मां प्रापय स्वप्रदेश-
मन्तर्यामिन् सफलय सुखं लालसं त्वत्प्रदत्तम् ॥५॥

---

# शब्दानाम् अपप्रयोगाः

[ श्रीदुर्गामोहनभट्टाचार्यकृतवङ्गभाषामयनिबन्धस्यांशिकानुवादः ]

( पूर्वानुवृत्ताः )

भारविकवेः 'स्तिमितमक्षिसहस्रं' 'स्तिमितः समाधिः' भवभूतेः 'स्तिमितो महोदधिः' 'विस्मयस्तिमितं हृदयम्' 'प्रसन्नस्तिमिता दृष्टिः' 'स्तिमित-विकसितमालोकनम्' कह्लणस्य 'निवातस्तिमितो दीपः' महाभारतस्य 'स्तिमितं सेनाकुलम्' 'स्तिमितः सभासद्गणः' श्रीमद्भागवतस्य 'स्तिमितोदार्णवः' 'स्तिमितसलिलः सरित्समूहः' इत्यादयोऽपि स्तिमितशब्दस्य तमेवार्थं समर्थयन्ति ।

अत्रैतदवश्यं वक्तव्यम् ; यद् भवभूतेर्मालतीमाधवस्य प्रथमाङ्के त्रिंशत्तमश्लोके 'स्तिमितविकसिते'त्यत्र स्तिमितशब्दो न मुकुलितार्थः, प्रत्युत शृङ्गाररससम्बन्धिदृष्टिविशेषस्य पारिभाषिकी संज्ञा स्तिमितेति। प्रियजने स्थापिता निश्चला दृष्टिरेव स्तिमिता दृष्टिरभिधीयते। तदुक्तं 'स्वगोचरान्न चाल्येत यत् तत् स्तिमितमुच्यते'। इति।

रामायणे अरण्यकाण्डे दृश्यते गोदावरी रावणभयेन स्तिमितां गतिमवलम्बितवतीति। तदुक्तं तत्र 'स्तिमितं गन्तुमारेभे भयाद् गोदावरी नदी'। इति। सेयं नदी स्वीयं तरङ्गचपलं रूपं परिहाय निःशब्दधारया गतिपरा बभूव इत्येव वाल्मीकिना विवक्षितमिति मन्यते। गोदावरी मन्थरप्रवाहेण चलितेत्यर्थविवरणमत्र नावश्यकम्।

कालिदासस्य कतिपयप्रयोगपर्यालोचनेन स्तिमितशब्दस्य अर्थविषये न पुनः कोऽपि सन्देहः पदमादधाति। यथोक्तं तेन कुमारे तृतीयसर्गे सप्तचत्वारिंशत्तमश्लोके 'किञ्चित्प्रकाशस्तिमितोग्रतारैः' इति। तथाहि—नासाग्रनिबद्धदृष्टिर्महादेवः निवातनिष्कम्पप्रदीपवत् ध्याननिमग्नः। तदीयनयनयोः पक्ष्मपंक्तिः निःस्पन्दा भ्रूयुगं निश्चलं तारा च किञ्चित् प्रकाशिता स्तिमिता चेति।

रघुवंशे च एकोनविंशसर्गे द्विचत्वारिंशत्तमश्लोके 'अर्पितस्तिमितदीपदृष्टयो गर्भवेश्मसु निवातकुक्षिषु'। इति। तथाहि—राजा अग्निवर्णः प्रमोदविलासेन यदा रात्रिं यापयति, तदा तस्य विहारं कुर्वतो निवातकुक्षिषु गर्भवेश्मसु स्तिमितदीपो रक्षितः। इति।

अभिज्ञानशकुन्तलस्य सप्तमाङ्के दृश्यते,—'रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः'। इति। तथाहि महर्षिर्मारीचो दुष्मन्तं प्रति आशिषं व्यसृजत् यथा भरतः भाविकाले उद्घातहीनस्तिमितगतिरथेन सागरमुत्तीर्य्य वसुन्धरां जेष्यतीति।

उल्लिखितेषु त्रिष्वेव स्थानेषु स्तिमितशब्दस्यार्थः निःस्पन्दः अचञ्चलः

निष्कम्प इति यावदित्यत्र सन्देहो नास्ति। ध्यानमग्नस्य महादेवस्य ईषत् प्रकाशिताया नेत्रताराया: सुसङ्गतो नि:स्पन्दभाव:। वायुहीने गृहकोणे दीपशिखाया: स्वभावत: सिद्धो निश्चलभाव:। वसुधाया विजयकाले रथगतेरावश्यको निष्कम्पभाव:। नैतेषु स्थानेषु सङ्गच्छते स्तिमितशब्दस्य अर्द्धस्फुटो वा निष्प्रभो वा मन्थरो वा अर्थ:।

---

# भतभूतिकालिदासतत्त्वम्

[ निबन्धिका—श्रीमती वाणीराणी सिंहजा ]

( पूर्वानुवृत्तम् )

भवभूतिस्तु नासीत् चक्षुर्ग्राह्याणां स्थूलदृश्यवस्तूनामेव भावाभिव्यञ्जक: कवि:। परमासीत् कवेरस्य सर्वान्त:करणसूक्ष्मतत्त्वावबोधिका दर्शकानां तथा पाठकानां चित्तद्रवकरी ह्लादिनी शक्ति:। तत एव पार्थिवानां सुखदु:खादिकानविग्रहान् मानसभावान छन्दोबन्धेन विग्रहवतो विदधे। शिल्पिनोऽस्यापूर्वरूपदाक्ष्यं निर्वर्ण्य सुविस्मिता विदग्धपरिषत्। विमुग्ध: सर्वैरेवोदीर्यते, अहो रूपं, अहो वैदग्ध्यं कविवरस्य! खृष्टीयसप्तमशतकीया वाग्देव्या इयं रसमयी नवीना मूर्तिरद्यापि इदानीन्तनीव विराजते विशालायतनासु काव्यचित्रभित्तिषु। अहो शिल्पिवरस्य लेखनीतूलिकाया हृद्यं रेखाङ्कनम्, यत् चित्रवर्त्तिकां भावविलासकलया संयोज्य आलेख्यविषयमसौ निरमासीत्। क्रमेणाधीतग्रन्थो मानवसमाजस्तदेव चित्रं सुनिपुणं निर्वर्ण्य विस्मयस्तोममावहति।

उत्तररामचरितमेव कवे: कीर्त्तिचातुर्ययोर्जयस्तम्भ इव। आदिमाङ्कतश्चरमाङ्कान्तं दृश्यपटपरिवर्त्तनमस्मिन् स्वल्पमेव सन्दर्शितम्। किन्तु वैशिष्ट्यमत्र तु नाटकस्य यत् रङ्गमञ्चे सुवेशानां नटादिपात्राणां पौन:पुनिकगमनागमनाभावेऽपि रचनाचातुर्येण मनस्यविरतमेवानुभूयते

भावविलासविचित्राणां नटादीनामविरलगमनागमनादिकम्। कविताबहुलमिदं नाटकम्। परमस्य सलीलरसप्रवाहः कुत्रापि भावावबोधं विनापि मुहुराकर्षति पाठकचित्तानि कौतुकनिवृत्तिमार्गेषु। भाषापारिपाट्यमेवं तन्नाटकस्य शीर्षस्थानग्राहित्वे निदानम्। ऐतिहासिका बहूनि तावत् सामाजिकानि तथ्यान्यस्मात् समासादयन्ति। भूप्रवृत्तिसंग्राहका अपि जानन्ति तावदितो बहूनि प्राचीनभारतीयनदनदीनगनगरीणामनेकशो विवरणानि। मनःसमीक्षकाणां पुरतः परिस्फुटमेव मानवचित्तेषु जीवद्दशापर्यायपरिवर्त्तनेन सुखदुःखं कीदृगनुभूयत इति। नाटकनायकस्य विलापमाकर्ण्यानेके सहृदया अश्रूणि मुञ्चन्ति। दृश्यते च दुर्मुखमुखादुपश्रुत्य पौराणामसाम्प्रतं जल्पनं शोकक्षोभोत्क्षिप्तहृदयेन सीतानिर्वासनप्रवणेन रामचन्द्रेणोक्तं "हा कष्टं! अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः।

शैशवात् प्रभृति पोषितां प्रियां,<br>
सौहृदादपृथगाश्रयामिमाम्।<br>
छद्मना परिददामि मृत्यवे,<br>
शौनिको गृहशकुन्तिकामिव॥

तत् किमित्यस्पर्शनीयः पातकी देवीं दूषयामि, अपिच,—

अपूर्वकर्म-चाण्डालमयि मुग्धे विमुञ्च माम्।<br>
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्" ॥ इति उत्तरचरिते।

अकृत्रिमप्रणयस्य प्रशान्तमूर्त्तिमालोक्य विदग्धसमाज आनन्दस्तब्धः सन् विस्मयविस्फारितलोचनं निर्निमेषं विदधाति। प्रणयमाधुर्यस्य रूपायनं तथा अनुभूतिः केनोपायेन सम्भवति—इति पृच्छायां भवभूतेरद्वितीयान्युपमानानि एव उत्तरत्वेनोपस्थाप्यन्ते। ततः प्राचीनैरुक्तम्, 'कारुण्यं भवभूतिरेव तनुते'। इति। आर्यासप्तशतीग्रन्थे गोवर्द्धनाचार्येणाप्युक्तम्; 'भवभूतेः सम्बन्धाद् भूधरभूरेव भारती भाति'। इति। एतादृशः कारुण्यादृते कथं "ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्" इत्येष श्लोकांशः संगच्छते?

कविरसौ न केवलं करुणरसं परं वीररसमपि नैपुण्येनाङ्कितवान् । उत्तरचरितस्य तुरीयाङ्के यत्र खलु त्रस्तचकितैर्बटुभिः परिवृतो लवः मेध्याश्वस्य पताकां वाचयित्वा सव्यथं कथयति,—"अहो सन्दीपनान्यक्षराणि !" इति ; तत्र वीरपुत्रस्य लवस्य शौर्यातिशय्यमेव व्यज्यते । दशकण्ठकुलधूमकेतो रामस्याभिधानम् आकर्ण्यापि क्षत्रियाभिमानी उरुशक्तिशाली लवः सैनिकान् प्रत्याह ।

"यदि ते सन्ति सन्त्वेव केयमन्या विभीषिका ।

किमुक्तैः, सन्निपत्यैव पताकां वो हराम्यहम् ॥" इति ।

रावणविजयिणो रामचन्द्रपादा यदि विद्यन्ते, तर्हि तिष्ठन्तु ते, परं तन्नाम्ना नः विभीषिकाप्रदर्शनं वृथैव स्यात् ।

दृप्तानां सैनिकानां सक्रोधभर्त्सनं, लवं दभ्रमपि विचलितं नाकरोत् । विस्फुरितानामस्त्राणां तर्ज्जनमाकर्ण्य सस्मितमाह ;—किं नाम ? विस्फुरन्ति शस्त्राणि ? इति । आत्मनो क्षात्रशक्तिं स्मृत्वा दृप्ताननो वाचयति स्म ;—

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र

मुद्गारिघोरघनघर्घरघोषमेतत् ।

त्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-

जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ उत्तरराम ३० श्लोकः ॥

अहो मानवकस्य सुक्षत्रियोचिता साहसिकता । रौद्ररसात्मकस्तथा गौड़रीतिबद्धोऽयं श्लोकः ॥ उक्तं साहित्यदर्पणकृता विश्वनाथेन,—

"ओजःप्रकाशकैर्वर्णैर्बन्ध आड़म्बरः पुनः ।

समासबहुला गौड़ी" इति । अत्र विद्यमानोऽपि दुःश्रवत्वदोषो वक्तुः क्रुद्धत्वाद् गुणत्वे पर्यवसितः । उक्तञ्च दर्पणे—

"वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।

रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥ इति

वीररसद्योतकः समयोचितोऽयं कविताबन्धः । रामस्य प्रजावात्सल्यं सीतात्यागमात्रेणैव सर्वैः सम्यगुपलब्धम् । तत्र विस्तरेणालम् । अपत्य-

स्नेहाधिक्यमपि दर्शितं कविना षष्ठाङ्के। आत्मतनयमजानतापि लक्ष्मणात्मजस्य प्रतिद्वन्द्विनं लवं दृष्ट्वा स्नेहाकुलितहृदयेन रामभद्रेणोक्तम् "अयि वत्स! कृतं कृतमतिविनयेन। अनेकवारमपरिश्लथं परिष्वजस्व ॥

परिणतकठोरपुष्करगर्भच्छदपीनमसृणसुकुमारः।
नन्दयति चन्द्रचन्दननिस्यन्दजडस्तव स्पर्शः" ॥ (६ष्ठ १२)

इत्यपत्यस्नेहरसाप्लुतानि श्लोकाक्षराणि पुत्रवतां मर्मस्पर्शीनि इति मन्ये। अतः परं सदा परोक्षस्थितेन सम्भ्रान्तेन कुशेन प्रोक्तां वीरवचनप्रयुक्तिमुपश्रुत्य रामचन्द्रः कमप्यनिर्वचनीयं भावं लभमानो रोमाञ्चिताङ्गो वर्णयति स्म—

"अथ कोऽयमिन्द्रमणिमेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम्।
नवनीलनीरधरधीरगर्ज्जित-
क्षणबद्धकुट्मलकदम्बडम्बरम् ॥ १७ उः चः

तथा कुशमपि आह्वयति स्म,—एह्येहि आयुष्मन्!

"अमृताध्मातजीमूतस्निग्धसंहननस्य ते।
परिष्वङ्गस्य वातसल्यादयमुत्कण्ठते जनः ॥ इति उः चः २१।

ततः कविना प्रमदायाः परिसान्त्वनावसरे उक्तः कश्चिदपरः श्लोकः।

"अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ इति (उः चः ७)

( क्रमशः )

———

अखिलभारतवर्षीय-देवभाषापरिषदः सप्तदशमहाधिवेशने
सभापतिपदमलङ्कुर्वतां
महामहोपाध्याय-श्रीचिन्नस्वामिशास्त्रिणाम्

# अभिभाषणम्

( पूर्वानुवृत्तम् )

## देशान्तरेऽपि प्रसृतेयम्

न केवलं भारतवर्षे, यवद्वीपे ( Java ) सुवर्णद्वीपे ( Sumatra ) चम्पायां ( Annan ) मलयद्वीपे ( Malaya ) सिंहलद्वीपे ( Cylon ) च, न केवलं महत्तरः प्रचारो व्यवहारोऽपि सुमहानासीदिति तत्रत्यैश्चिह्नैरद्यापि परिदृश्यमानैः सूच्यते। बोर्नियो (Borneo) द्वीपे स्वैस्तवीय-चतुर्दशशताब्द्यां तद्देशाधिपतिना स्वकृतदानादिप्रख्यापनाय निर्मापिता बहवो यूपस्तम्भा गैर्वाणवाणीगर्भा अद्यापि समुपलभ्यन्ते। येष्वन्यतमस्थाः श्लोका अत्रोद्ध्रियन्ते—

श्रीमतः श्रीनरेन्द्रस्य कुडुङ्गस्य महात्मनः।
पुत्रोऽश्ववर्मा विख्यातो वंशकर्ता यथांऽशुमान ॥१॥
तस्य पुत्रा महात्मानः त्रयस्त्रय इवाग्नयः।
तेषां त्रयाणां प्रवरः तपोबलसमन्वितः ॥२॥
श्रीमूलवर्मा राजेन्द्रः य(इ)ष्ट्वा बहुसुवर्णकम्।
तस्य यज्ञस्य यूपोऽयं द्विजेन्द्रैस्संप्रकल्पितः ॥

एवं च चीनान् तर्किस्थानानि चारभ्य यव-सुवर्ण-मलय-सिंहलद्वीपान् यावत् बाह्यदेशानप्यभिव्याप्यावातिष्ठत भाषैषा। ते तत्रत्या जनाश्च तदाऽस्माकीना एवासन्। कालवैपरीत्येन जात्यन्तरमनुप्रविष्टा अपि भारतीयामेव संस्कृतिं काञ्चिदद्य यावदाबिभ्रति। तत्रासंख्यानि ताम्रशिलाशासनानि सुरभारत्यां उट्टङ्कितानि समुपलभ्यन्ते। अद्यापि मलयदेशे

सेनानीः "नौबलाध्यक्ष"पदेन व्यवह्रियते। तत्रत्या यवद्वीपीयाश्च अतितरां वाञ्छन्ति देवभाषायाः पुनः प्रसारं स्वदेशे। इदमपि ततोऽचिर-प्रतिनिवृत्तानां श्रीशिवराममूर्तिमहोदयानां मन्त्रिमत्रवराणामेव मुखाच्छ्रुतम्। एवं महान्तं कालमिव सुविपुलं देशमप्यभिव्याप्य स्थितेयं सुरभारती पुनः राष्ट्रभाषात्वं कुतो न विन्देत? अत्र च प्रयतमानैरस्माभिर्न नूत्ने पथि पदं निधीयते। अपितु प्राचीनैः क्षुण्ण एव मार्गो मध्यकाले किञ्चिदिव विच्छिन्नः पुनः संघटयितुमिष्यते। एतावदेव, न ततोऽधिकं किञ्चित्।

परं तत्र सावधानं विचारणीयम्,—प्रयत्नोऽयमस्माकं तिलेषु तैल-निष्पीडनम्, उत सिकतास्विति। न वयं जानीमः, कुतो वा न फलेद-स्माकं मनोरथतरुरिति। हिन्दीभाषाम्, उर्दूभाषां तदुभयसंवलितां वा काञ्चनान्यां भाषां राष्ट्रभाषां कर्त्तुम् अतत्प्रचारेषु देशेषु यावान् परिश्रम आस्थेयः, ततोऽल्पेनैव तेन, लघुना च कालेन मितेन च व्ययेन संस्कृतभाषाज्ञानसम्पादनं तत्र सुशकमित्यस्माकं सुदृढो विश्वासः। न वयं हिन्दीभाषाविरोधिनः। जानीमस्तां, तदीयं सारल्यं, सौन्दर्यं, बहुव्यापित्वं च, परं सत्यपि हिन्दीभाषायाः प्रचारबाहुल्ये सन्त्यद्याप्य-संख्येया ग्रामाः श्रेणयो वा वङ्गदेशे मद्रमण्डले च यत्र हिन्दीभाषाया नामापि न जानते जनाः। परं तेषु प्रदेशेषु तत्सन्निहितेषु वा स्थलेषु संस्कृतज्ञा द्वित्रा अवश्यं निवसन्ति।

किञ्च भारतीयानां हिन्दुत्वेनात्मानमभिमन्वानानां पूर्वजेष्ववश्यमेव केचिदस्यामधीतिनो भवेयुरिति एतेषां मस्तिष्कं तत्संस्कारसंस्कृतमेव भवेदित्यतोऽन्तर्निगूढस्य तस्योत्थापनं नातिप्रयासेन कर्तुं शक्यते।

गीर्वाणभाषायामतिकठिनानि पदानि बहूनि प्रकृतदेशकालानुपयुक्तानि सन्ति यान्यवलोक्य बहवो नितरां बिभ्यति तामध्येतुमिति केचिदाशेरते। परं न तादृशो दोषस्तावान् तत्र यथेमे बिभ्यति। अस्तु वा, तानि सर्वाण्यध्येयानीति का वा राजाज्ञा? सर्वैर्वा साऽध्येयेति? पाठप्रणाली काचित् प्रवर्त्यताम्। पाठ्यग्रन्था अपि निर्मीयन्तां सरलसरलैः प्रकृतोप-

योगिभिः पौनःपुन्येन व्यवहारपथवर्त्तिभिः पदकदम्बैरर्थविशेषैश्च ये गुम्फिता भवेयुः।

किञ्चाधिकरणराजसभादावप्रतिहतव्यवहारौपयिकानि पारिभाषिकाणि पदानि प्रायशोऽस्मत्पूर्वाचार्यैरन्विष्यान्विष्योपयुक्तानि प्रयुक्तानि च तत्सम्बद्धेषु ग्रन्थेषु। अतस्तदर्थमपि न नः क्लेशलेशः। कोऽयमत्रैतादृशोऽनिर्भेद्य आग्रहविशेष इति चेत्? कथमयमाग्रहः? यदि नाम कश्चित् स्वस्य स्वभ्रातॄणां स्वदेशमात्रस्य च निखिलश्रेयोनिदानभूतां, सर्वस्मादपि दुःखनिवहात् परित्राय पोषयन्तीं जननीसमां परमे स्थाने प्रतिष्ठाप्य पूजितां कालचक्रवशात् स्वस्थानतः परिच्युतां दैवीं वाचं कामदुहं पुनः स्वस्मिन्नेव स्थानेऽभिषिच्य तादृशं देशस्य मङ्गलं पुनराहर्त्तुमभिलषति सोऽयमाग्रहः? अतस्स्वकर्तव्यमिदं कार्यम् एकैकस्यापि भारतजन्मनः स्वोन्नतौ स्वदेशोन्नतौ दर्शितादरस्येति माधिकमत्र वक्तव्यमवशिष्यते।

## देशभाषाप्यावश्यकी

यथेदानीमाङ्गलभाषाया राष्ट्रभाषात्वेऽपि तास्ता माण्डलिक्योऽपि-भाषा यथायथं स्वं स्वं स्थानमवाप्य दीप्तिभाजो नैकविधामभिवृद्धिमवाप्नुवत्य आसते, तथैवेतः परमपि, इतोऽप्यधिकतरं गौरवमादधानाः स्वकार्यं कुर्वाणाः स्वं क्षेत्रं प्रसारयन्त्यो ध्रुवमेधन्ताम्। सत्यवसरे शासनलेखनकार्यादावपि यथोचितमुपयोगं लभन्ताम्, परमिमास्तत्तन्मण्डलमात्रविश्रान्ता भवेयुः, देवभाषैषा तु सर्वप्रान्तसाधारणीतीयान् भेदः। भारतीयं शासनमेकसूत्रस्यूतं विधातुं भाषैषोपयुज्येत। अतो न कस्या अपि भाषाया गैर्वाण्या वाण्या सह स्पर्द्धायाः, सङ्घर्षस्य वाऽस्त्यवकाशलेशोऽपि। एवं करणेन समग्रभारतव्यापी सन्तोषः कश्चिन्निरतिशयो जनानां हृदये सम्पादितो भवेत्। भारतीयं च प्राचीनं गौरवं परिरक्षितं भवेत्। वाञ्छन्तीदमेव विशेषज्ञा विपश्चित्प्रवराः। तथाहि—

(१) पश्चिमवङ्गमण्डलाधिपतयः श्रीमन्तः कैलासनाथकाट्जूमहोदया-

स्सघण्टाघोषं सर्वप्रकारमुद्घोषयन्ति संस्कृतस्यैव देशराजभाषात्वमुचित-मिति पुनः पुनः। न केवलमेवम्। गते कलिकाताराजकीयसंस्कृतमहा-विद्यालयीयवार्षिकोत्सव-समये सभाध्यक्षैः बहुद्भिस्तैस्सुधीरमाघोषितं कदाचिदियं सुरभारती चिरादचिरेण वा स्वीयं प्राचीनं गौरवं, राज-भाषापदे प्रतिष्ठां वा प्राप्स्यत्येव। तन्न निरोद्धुं शक्यत इति।

(२) विहारप्रान्ताधिभुवां श्रीमतां श्रीमहादेव-श्रीधरअणेमहोदयानां मुखतो बहुधाऽस्माभिरयमेवोद्घोषशुश्रुतो लेखतश्चावगतः।

(३) आन्ध्रविश्वविद्यालयीयोपाध्यक्षाः श्रीमन्तः C रामलिङ्गरेड्डिमहो-दयाः शतश इममेवाशयमात्मीयं व्यतृण्वन भाषणैर्लेखनैश्च।

(४) मद्रदेशीयोच्चतमाधिकरणाध्यक्षाः (Cheif Justice) श्रीमन्तो राजमन्नारमहोदयाः भारतदेशे संस्कृतमेकमेव राजभाषापदमलङ्कर्तुमल-मिति सोद्घोषं कथयन्ति।

(५) प्रो० ताम्सनमहोदयोऽप्यमुमेवाशयं नैकशः प्रकटीचकार।

(क्रमशः)

---

## वृत्तवर्तिका

वङ्गीयसंस्कृतशिक्षापरिषदः कलिकातासंस्कृतमहाविद्यालयतः पृथक्-कारेण व्यवस्थापनं निष्पन्नप्रायमुपलक्ष्यते। तदर्थं पृथग्व्यवस्थागार-प्रबन्धोऽपि संस्कृतमहाविद्यालयभवनाद् वहिः क्वापि क्रियते। नवीयतया तस्याः परिषदो निर्माणार्थं समपेक्षिता सदस्यनिर्णायकपण्डितसूची तदर्थं संघटितया समित्या पुनर्विविक्ता सिद्धान्तसरणिं परिगृहीतवती नाति-चिरादेव प्रकाशं गता परिषदो घटने सुतरां त्वरामनुकूलयिष्यति। तदत्र प्रकृतकृत्याधिकृतानां कर्मनिष्ठां वयमन्तरेण सविस्मयेन नितरां प्रशस्ति-वाचा समभिनन्दामः।

---

# Sanskrit Sahitya Parishat Series

**(Corrected up to April, 1946)**

1. **Kapalakundala**—Edited by Pt. Haricharan Vidyaratna (Almost out of Stock). Re. 1

2. **Kalitantram**—Edited by Pt. Satish Chandra Siddhantabhushan. As 10 ; As. 8 (for members).

3. **Sankari-sangitam** of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Almost out of stock.) Re. 1.

4. **Muktivadah** of Gadadhara Bhattacharya—Edited by MM. Kalipada Tarkacharya. (Out of stock.) Rs. 5.

5. **Durgapuja-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. Re. 1. As. 4 ; Re. 1 (for members).

6. **Pitridayita** of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Re. 1-4 ; Re. 1 (for members).

7. **Durgotsava-vivekah** of Shulapani—Edited by Pt. Satishchandra Siddhantabhushan. As. 8 ; As. 6 (for members).

8. **Karakollasah** of Bharata Mallika—Edited by Pt. Janakinath Sahityashastri. As. 2.

9. **Introduction to the Rigveda of Sayanacharya**—Edited by Dr. Pashupatinath Shastri, M.A. B.L. Ph. D. As. 12 ; As. 10 (for members).

10. **Grahayaga-tattvam** of Raghunandana Bhattacharya—Edited by Pt. Satishchandra Siddhantabhushan. As. 7 ; As. 5 (for members).

11. **Prabhakara-vijayam** of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharad and Pt. Ramanath Shastri. Re. 1 As. 4 ; Re. 1 (for members).

12. **Tirthatattvam** of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. As 6 ; As 5. (for members).

13. **Pavanadutam** of Dhoyi, a court pcet of Lakshmanasena of Bengal—Edited by Prof. Chintaharan Chakravarti, M.A. As. 12 ; As. 10 (for members).

14. **Nala-damayantiyam** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 As. 4 ; Re. 1 (for members).

15. **Prashastapada-bhashyam**—Edited by MM. Kalipada Tarkacharya. Rs. 2 ; Re. 1 As. 8 (for members).

16. **Yatratattvam** of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Re. 1. ; As. 12 (for members).

17. **Rik-pratishakhyam**—Ed. by Dr. Pashupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 2 As. 8 ; Rs. 2 (for members).

18. **Prameyaratnavali** of Baladeva Vidyabhushan—Ed. by Prof. Akshayakumar Shastri. Re. 1 As. 4 ; Re. 1 (for members).

19. **Chhandogyamantrabhashyam** of Gunavishnu—Ed. by Prof. Durgamohan Bhattacharya, M.A. Rs. 3. As. 12 ; Rs. 3 (for members). [Almost out of stock]

20. **Bhasharatnam** of Kanada Tarkavagish—Ed. by MM. Kalipada Tarkacharya. Rs. 3. As. 8 ; Rs. 3 (for members).

21. **Manodutam** of Vishnudasa—Ed. by Prof. Chintaharan Chakravarti, M.A. As. 10 ;As. 8 (for members).

22. **Prasanta-ratnakaram** (a new Drama) of MM. Kalipada Tarkacharya. Re. 1 ; As. 12 (for members).

23. **Devisatakam** of Mahamahopadhyaya Krishnanath Sarvabhauma —Ed. by Pt. Janakinath Shastri. As. 6; 5 (for members).

24. **Sataranja Kutuhalam**:—Ed. by Prof Chintaharan Chakravarti Kavyatirtha M.A., As. 4

25. **Satyanubhavam**:—(a new MahaKavya) of MM. Kalipada Tarkacharya, Rs. 2 As. 8; Rs. 2 As. 4 (for members).

---

Printed by Bishnupada Bhattacharya M. A. Kabyatirtha. at Calcutta Oriental Press, Ltd., 9, Panchanan Ghose Lane, Calcutta and Published by the same from Sanskrit Sahitya Parishad, 17 R. G. Kar Road, Calcutta.